पुस्तक के सम्बन्ध में सूचना

नाम : डॉ० आशाराम त्रिपाठी,
बी-1102,ओ.सी.आर.काम्प्लेक्स,
विधान सभा मार्ग,
लखनऊ- 226001

पुस्तक का नाम: "हिरण्मयेन पात्रेण" (संस्कृत निबन्ध)

प्रकाशन वर्ष : 1994

प्रमाणित किया जाता है कि यह मेरी मौलिक कृति है तथा वर्ष 1994 में प्रथमबार प्रकाशित है।

मूलत: मैं उत्तर प्रदेश का निवासी हूँ।

डॉ० आशाराम त्रिपाठी
बी-1102 ओ.सी.आर.काम्प्लेक्स
विधान सभा मार्ग,
लखनऊ- 226001

प्रथम संस्करण, 1994





# हिरण्मयेन पात्रेण

(संस्कृत निबन्ध)

1994

डॉ० आशाराम त्रिपाठी

मूल्य : 100 रु०

प्रकाशक

आशुतोष प्रकाशन,
बी- 1102 ओ.सी.आर. काम्प्लेक्स,
विधानसभा मार्ग, लखनऊ- 226 001

**HIRANMAYEN PATREN**

(Collection of Sanskrit Essays) by Dr. Asha Ram Tripathi, published by Ashutosh Prakashan, B-1102, OCR Complex, Vidhan Sabha Marg, Lucknow- 226001. Printed by Printech B-1 Himanshu Sadan, 5- Park Road, Lucknow. First Edition, 1994.

Price Rs. 100

# आशीर्वचांसि

'हिरण्मयेन पात्रेण' नाम्ना सग्रंथिता रचनेयं शास्त्रेभ्यः सारमुद्धृत्य नूत्नप्रत्नसामञ्जस्यं विदधती मन आवहति। संस्कृतवाङ्मयस्य सार्वकालिकं सार्वदेशिकं च महिमानं प्राञ्जलया संक्षिप्तया च भाषया ग्रन्थकारोऽत्र विवृणोति, इत्यनेन साम्प्रतिकेभ्यो जनेभ्यो हितकरं प्रीतिकरं च सत्यं संस्कृतानुरागिणं चेतः प्रसादयति। अष्टाविंशत्सु निबन्धेषु विषयवैविध्यं भङ्गिवैविध्यं चादि दरीदृश्यते। एषु निबन्धेषु केचन नीतिपराः केचन भारतभावपराः केचन च ज्ञानप्रदाः। एवं लघुषु निबन्धेषु संस्कृतभाषाया गौरवं यत्नेन समचायि।

स्नेहभाजनं ग्रन्थकारं श्रीमदाशाराममत्रिपाठिनं भूयभूय आशिषाभिनन्दामि, एवमेव सुरभारती नवनीतमथनेन संलग्नो भवेस्तस्य नवनीतस्य आस्वादं च वितरतु।

**शमिति !**

**19.12.93** **विद्यानिवास मिश्र**

# विषयानुक्रमणिका

# अभिनव भारते संस्कृतम्

अस्माकं प्रियतमो भारताभिधानोदेशः चिराय अखिलदुःखमूलां परतंत्रतामनुभवन् शोचनीयां कष्टतरां दशामापन्नोऽभूत्। कतिपय देशभक्तानां विवेकविहिताभिः प्राणपणचेष्टाभिस्स दास्यान्मुक्तिमधिगम्य स्वातंत्र्योचितमभिनवं स्वरूपमधिगतोऽस्ति। साम्प्रतमेतस्य समुन्नयनं विकासश्च परमावश्यकः प्रतिभाति। के उपायास्सन्ति तदर्थमिति विचारणायां जायमानायां राष्ट्रनायकाः संस्कृत-शिक्षामपि अन्यतममुपायं मन्यन्ते। अस्ति चैतस्य देशस्य प्राचीनतमा भाषा संस्कृतम् सा देववाणी सुरसरस्वत्यादिनामभिः प्रसिद्धिं प्राप्तास्ति। संस्कृतं नाम दैवीवागन्वाख्यातातपः पूतात्मभिर्महर्षिभिर्दृष्टा वेदा मूलरूपेण अस्यामेव भाषायां वर्तन्ते। उपनिषदः स्मृतयः अष्टादशपुराणानि महाभारतं चैतस्यां देववाण्यां मूलरूपेण सन्ति। साचेयं पुराकाले व्यापकं प्रचारं प्रसारंचाधिगम्य सकलभारतीयानामादरभाजनं जाता। साम्प्रतं कालप्रभावेण तस्या अहरहः ह्रासएव भारत दौर्भाग्यात् समजनि। भारतंसंस्कृतशिक्षा प्रसारेणैव स्वीयं प्राचीनगौरवं पुनः प्राप्तुमर्हति।

यतो हि समस्त मानवजातेः अभ्युदयदायका निःश्रेयससाधका ये सद्गुणाः सन्ति तेषांस्वरूपं तल्लाभाः तद्ग्रहणौचित्यं च संस्कृतभाषा साहित्ये यथाविस्तरेण वर्णिताः न तथान्यासु कासुचिदपिभारतीयभाषासु।

तत्र अनुशासनं संस्कृतशिक्षायाः प्रथमं प्रयोजनम्। अनुशासनहीनैः जनैः राष्ट्रस्य समाजस्य जातेर्धर्मस्य च कदापि समुन्नतिविकासश्च न कर्तुं शक्यते।

संस्कृतं सर्वदैव अनुशासनपालने प्रसह्य प्रवर्तयति। यथा मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भवेति। एतस्य श्रुतिवचनस्यायमाशयोऽस्ति यत्सर्वैरेतेषां मात्रादित्रयाणामनुशासने वर्तितव्यम्। तदैव आत्मोत्कर्षसाधकागुणाः स्वस्मिन्नाधातुं शक्यन्ते न तेषामनुशासनमनादृत्य-उक्तं च- सर्वेतस्यादृतालोकाः यस्यैते त्रयआदृताः। अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥

अतोऽनुशिष्टैरेव विकासः कर्तुं शक्यते भारतस्य। द्वितीयंप्रयोजनम् -

सांस्कृतिकमैक्यम्-संस्कृतभाषा भारतं सांस्कृतिके ऐक्यसूत्रे वध्नाति। पुष्णाति च भारतीयां संस्कृतिम्। संस्कृतेर्विनाशः आत्मविनाश एव। संसारे बहूनां देशानां नामापि न श्रूयते। संस्कृतेर्महत्त्वेन भारतस्य महत्त्वमक्षुण्णमस्ति। संस्कृतभाषा च तस्याः पोषिका। अत एवोच्यते - भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा॥

संस्कृतमाचाररक्षायै प्रोत्साहयति। आचारः परमो धर्मः इति। वर्तमानकाले भारते गेहे गेहे जने-जने अचारभ्रंशः सर्वत्र व्याप्तोऽस्तिं तेन देशोत्थाने महतीबाधा वर्तते। यथा केचन् तस्करवृत्या प्रभूतं धनं संग्रहीतुं यतन्ते केचन श्रमंविहाय आलस्याभिभूताअन्यायेनार्थसंचयंकुर्वाणाः सन्ति। शास्त्रीयशिक्षामधि-गच्छन्तोऽन्तेवासिनः शास्त्राभ्यासश्रमात् प्रमाद्यन्तोऽनुचिताचरणैः परीक्षोत्तरणाय बद्धपरिकरो विलोक्यन्ते। एवं गर्हितं पन्थानमनुरसन्तस्ते देशं समाजं चावनतिगर्ते पातयन्ति। संस्कृतं भेरीघोषेण तांस्तथा कर्तुं वर्जयति- श्रमं कुरुत अभ्यासं कुरुत उद्योगमातिष्ठत, साफल्यं प्राप्नुत 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेनदेयमिति कापुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्रदोषः॥' आलस्यशत्रुं जहि उद्योगबन्धुं वृणीहि च

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमोबन्धुर्यं कृत्वा नावसीदति॥

अतः श्रमाचरणे आदरः कार्यः श्रमोऽस्माकं प्रजानां राजाऽस्ति। तत्सहायेन स्वभोग्यवस्तूनां प्रभूतमुत्पादनंविधेयं तेन देशवासिनां दैन्यं दूरतरं पलायिष्यते निर्धनता निधनं यास्यति। समृद्धिः समुत्कर्षं समेष्यति।

अधिकधनस्यवस्तूनां च संग्रहान्निवारयति संस्कृतम् स्वोदरपूर्ति-शरीराच्छादनवस्त्रादधिकतरवित्तसंचयी जनः गर्हितोभूत्वा चौर्यापराधेन दण्डनीयः कथ्यते। तथाचोक्तम् यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।

अधिकं योभिमन्येत स स्तेनो दण्डमर्हति।

चतुर्वर्गफलप्राप्तिः मानवस्य प्रमुखं लक्ष्यम् - धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थाः पुरुषेण प्राप्तव्याः भवन्ति। तेषां स्वरूपं प्रयोजनानि तत्प्राप्त्युपायाश्च

सविस्तरं धर्मादि तच्छास्त्रेषु विशदं वर्णिताः सन्ति। अत्रायं निष्कर्षः पुरुषार्थचतुष्टयप्राप्तये संस्कृतभाषा नियतं शिक्षितव्या।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

सर्वविधधर्मेषु आचारस्य प्रमुखता प्रोक्ता - आचारः परमो धर्मः श्रुत्युक्तः स्मृति एव च। धनापेक्षया आचाररक्षाऽधिकं विधेया धनं नष्टं पुनः प्राप्तुं शक्यते वृत्तं तु न कथंचित्। तथाचोक्तम्- वृत्तं यत्नेन संरक्षेत्, वित्तमेति च याति च। अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतोहतः॥ आचारहानिः परमाहानिः। वित्तहानिर्नकापि हानिः। इत्थं संस्कृतं भ्रष्टाचारान् जनान्भृशं भर्त्सयति। आचारोत्कर्षेण भारतीया मनीषिणः जगद्गुरवोऽभूवन् अघोषयंश्च - एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

उत्पादितवस्तूनां समानरूपेण आवश्यकतानुसारं समानवितरणं कर्तुंसंस्कृतमुपदिशति। किन्तु अद्यत्वे न तथा क्रियमाणं दृश्यते। उद्योग- पतयो धनाधिपाः श्रमिकेभ्योऽल्पतरं तद्भागं वित्तीर्य परोपार्जितधनेन उन्मत्ता विलासरसिकाः सानन्दं विहरन्ति श्रमिकाणां दुःखद्रारिद्र्यचिन्ता तेषां चेतसि लेशतोऽपि न जायते। न ते ईदृश विचारशालिनो भवन्ति - यत् -

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख भाग्भवेत्॥

एतस्य वचनस्य समानरूपेणवितरणप्रणाल्यां समादृतायामेव सम्भाव्यते नान्यथा संस्कृतं शिक्षयति - सत्येमव जयते नानृतम्, सर्वंसत्येप्रतिष्ठितम् इति च सत्येनसमः कश्चिद्धर्मो नास्ति असत्येन समं पापं च न विद्यते। यदि कस्यचिद् गृहस्य समाजस्यदेशस्य च सर्वे जना असत्यरता भवेयुस्तदा तस्य विनाशो नियत एव। गैहिकी सामाजिकी आर्थिकी सुव्यवस्था सत्येनैव सम्पन्ना भवति असत्येन च विपन्ना भवति। तेन सत्यसेवनाय संस्कृतं प्रेरयति।

अन्यच्च सकलप्रमोजनमौलिभूतं प्रयोजनम्-बन्धुत्व भावना उच्यते। उदार-

चरितानांतु वसुधैव कुटुम्बकम्। धर्मार्थकामरूपस्त्रिवर्गो नैकाकिन क्लिश्यमाने धर्मसेवा कामसेवा वा फलप्रदा भवति। किन्तु तैः सहैव उक्तम् तद्भगवता महर्षिणा वेदव्यासेन-

पुंसस्त्रिवर्गोनिहितः सुहृदो ह्यनुभावितः।
न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते॥

श्रुतिरप्याह- पुमान् पुमांसं परिपातु विश्वतः॥

एको बन्धुः दुःखमनुभवति तदा स्व सुखानुभवः पापाचरणमेव भवतीत्यर्थः। अयमेव साम्यभावः परमेश्वरस्योत्तमा पूजा जगद् विजयश्च मन्यते तदुक्तं गीतायाम्- इहैवतैर्जितः सर्गो येषां साम्ये स्थितं मनः। स्वकर्मपरायणतैव परमेश्वरप्रसादनोपायः। अधुनाऽस्मिन् देशे नियुक्ता जनाः सम्यक् स्वनियोगं नानुतिष्ठन्ति। तमुपेक्षमाणा निरर्थकवार्ताव्यापारेण कालं यापयन्ति च तेन देशस्य जनानां च महती हानि उन्नतौ महद्व्यवधानं जायते।

संस्कृतं स्वकर्मनिरतिं शिक्षयति- स्वकर्मपूर्तिरिव सिद्धिप्रदा परमेश्वरार्चा चास्ति। यतः ईश्वरः सकल जीवानां हृदयेऽन्तर्यामितयास्थितः तस्यार्चास्वकर्माचरणेनैव नान्यथा तदुक्तं श्रीमद्भगवद्गीतायाम् - यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्यसिद्धिं विन्दति मानवः॥ इत्थमनुशासनम् - एकता उद्योगाभिवृद्धिः अधिकश्रमस्तेन प्रभूततरवस्तूत्पादनं ततः समृद्धिलाभश्च संस्कृतशिक्षायाः मुख्यानि प्रयोजनानि। प्राप्तेषु तेषु सजातेषु भारतवर्षं संसारे महतीं प्रतिष्ठां ख्यातिं गौरवं च गमिष्यतीति निर्विवादम्। अतो राष्ट्रोन्नायकाः संस्कृतशिक्षणप्रसाराय कृतसंकल्पाः भवन्तु।

# हिरण्मयेन पात्रेण

अयं मन्त्रः ईशावास्योपनिषदः उद्धृतोऽस्ति। शुक्लयजुर्वेदमाध्यन्दिनसंहिता काण्डद्वयात्मिकाऽस्ति एकं कर्मकाण्डमपरं ज्ञानकाण्डम्। सा चत्वारिंशदध्यायेषु संविभक्ताऽस्ति। तत्र प्रथमाध्यायाद् एकोनचत्वारिंशाध्यायसमाप्तिपर्यन्तं दर्शपूर्णमासाद्यश्वमेधान्तं कर्मकाण्डं निरूपितम्, तदनन्तरम् अन्तिमे चत्वारिंशेऽध्याये सप्तदशभिर्मन्त्रैः ज्ञानकाण्डं निरूपितम्। एवं यज्ञादिकर्मकाण्डेन शुद्धान्तःकरणं प्रति ज्ञानकाण्डम् एकेनाऽध्यायेन निरूप्यते। अतोऽस्याध्यायस्य 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्, इत्यादिमन्त्राणां क्वचित् कर्मसु विनियोगो नास्ति, अपितु ते आत्मनो याथात्म्यप्रकाशकत्वात् शोकमोहादिहेतुम् अज्ञानं निवर्त्य आत्मैकत्वविज्ञानमेव प्रतिपादयन्ति। अतोऽस्मिन्नध्याये दध्यङाथर्वणः ऋषिः विविधैः संस्कारैः संस्कृतमधीतवेदं यथाशक्ति अनुष्ठितयज्ञं यमनियमवन्तं मुमुक्षं स्वशिष्यं पुत्रं वा आत्मज्ञानाय शिक्षयति। अस्याऽध्यायस्य अन्तिमे मन्त्रे स ब्रह्मात्मैक्यं प्रतिपादयन्नेवम् उपदिशति-

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
योऽसावादित्ये पुरुषः सोऽसावहम्॥

अस्याध्यायस्य अध्यात्मविषयकत्वात् अयं संहितातः पृथक् कृत्य ईशावास्योपनिषद् इतिनाम्ना उपनिषत्सु गणितः। 'ईशावास्यमिदं सर्वम्' इति प्रथमे मन्त्रे 'ईशावस्यम्' इति पदमुपजीव्य अस्या उपनिषदः ईशावास्योपनिषद् इति नाम कृतम्। अस्यामुपनिषदि अष्टादशमन्त्राः विद्यन्ते।

पञ्चदशो मन्त्रः एवं श्रूयते-

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥

मन्त्रस्यास्य बह्व्यः व्याख्याः कृताः विविधैराचार्यैः। संहितास्थमन्त्रस्य व्याख्यातारः सन्ति उव्वटमहीधरप्रभृतयः आचार्याः। संहितास्थमन्त्रस्य अयमाशयः-

'हिरण्मयेन पात्रेण' अर्थात् हिरण्मयेन ज्योतिर्मण्डलेन सत्यस्य

आदित्यमण्डलस्थस्य अविनाशिनः पुरुषस्य मुखम् आच्छादितं वर्तते। तथापि यः असौ आदित्याभिमानी पुरुषः योगिभिरुपलक्ष्यते, सः असौ अहमस्मि। एवं मन्त्रेऽस्मिन् सूर्यमण्डलस्थस्य पुरुषस्य आत्मनः अभेदेन उपासनां कर्तुमुपदेशः कृतः ऋषिणा। आदित्यमण्डले यस्तदभिमानी पुरुषः सोऽहम् इत्यभेदबुद्ध्या स ध्यातव्य इति मन्त्रस्य तात्पर्यम्। वस्तुतः अस्मिन्मन्त्रे आदित्योपसना विहिता यस्याः समुल्लेखः बृहदारण्यकोपनिषद्यपि किञ्चिद् वैभिन्येन एवं कृतः।

"तद् यत्तत् सत्यमसौ स आदित्यो य एव एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुस्मिन्।" अस्यायमर्थः। य एतस्मिन्नादित्यमण्डले पुरुषः स सत्यं ब्रह्म। यश्चायं दक्षिणे अक्षणि पुरुषः सोऽपि सत्यं ब्रह्म। तावेतौ आदित्याक्षिस्थौ पुरुषौ एकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ अन्योन्यस्मिन् प्रतिष्ठितौ।

ईशावास्योपनिषदि यन्मन्त्रस्वरूपमस्ति, तस्य विशद्व्याख्याः कृताः आचार्यैः। ताः सर्वाः विभाव्य एतत् स्पष्टं वक्तुं शक्यते यन्मन्त्रेऽस्मिन् उपासकः स्वदेहस्यान्तकाले प्राप्ते ब्रह्मणः स्वरूपं द्रष्टुम् आदित्यमेवं याचते - हिरणमयेन ज्योतिर्मण्डलेन सत्यस्य आदित्यमण्डलस्थस्य ब्रह्मणो मुखम् अपिहितमस्ति। यथा रावेण घटस्य मुखम् आच्छादितं भवति तद्वत् यद्वत् कस्यचन गृहस्य द्वारम् अविहितं भवति तद्वत्। अत्र प्रयुक्तस्य पात्रशब्दस्य व्युत्पत्तिरेवं कर्त्तुं शक्यते- पिबन्ति रश्मयो रसान् यत्रस्थितास्तत् पात्रं सुवर्णसदृशं ज्योतिर्मण्डलम्। तेन सत्यस्य - 'सत्यस्य सत्यमिति' श्रुतेः आदित्यमण्डलस्थस्य ब्रह्मणः मुखामाच्छादितमस्ति। अतस्तदुद्घाटनाय ऋषिः आदित्यं प्रार्थयते- हे सर्वपोषक आदित्यदेव। सत्यधर्माय सत्यं धर्मो यस्य सः सत्यधर्मा तस्मै अर्थात् मह्यं तदवाप्तुं यद्वा सत्यधर्मस्य दृष्टये उपलब्धये तत्पिधानं त्वमपावृणु उद्घाटय इत्यर्थः। यथा लोके द्वारोद्घाटनं विना कोऽपि गृहाभ्यन्तरं प्रवेष्टुं न शक्नोति तथैव ज्योर्तिमण्डलस्वरूपस्यपिधानस्य उद्घाटनं विना ब्रह्मणः स्वरूपमपि द्रष्टुं नैव शक्यते। अतएव ऋषिः द्वारोद्घाटनपूर्वकं ब्रह्मणः स्वरूपं द्रष्टुं पुष्टिकारिणमादित्यं प्रार्थयतेऽस्मिन् मन्त्रे। अस्य मन्त्रस्य सम्यगाशयः व्याख्याकारेण ब्रह्मानन्देन एवं स्फुटीकृतः -

द्वारं विना कथं गन्तुं शक्यते ब्रह्मतत्परम्।
सत्यलोकस्य चात्मानं सूत्रभूतं सनातनम्॥

हिरण्मयेन पात्रेण सत्यस्य ब्रह्मणो मुखम्।
तीक्ष्णेण ज्योतिषा व्याप्तं गन्तुं नैव तु शक्यते॥
रश्मिजालं निराकृत्य द्वारं मे देहि भास्कर।
सत्यलोकस्य सव्याख्यं ब्रह्म गन्तुं च मे प्रभो॥

# सत्यं कण्ठस्य भूषणम्

"सर्वस्य जगतो मूलं सत्यमेव निगद्यते" कथनमिदं सार्वकालिकं सार्वत्रिकं वास्तविकं च वर्तते। सत्यं सर्वेषां प्राणिनां हितं सम्पादयति। समाजं सुरक्षितं करोति। यद् वस्तु यादृशं विद्यते तादृशं विवरणं प्रकाशनं कथनं च सत्यम्। तथा यद् विचार्यते तथा कथ्यते तथैव कर्मणा सम्पाद्यते तत् सत्यं कथ्यते। दार्शनिकास्तु "ब्रह्म सत्यं जगन्मिथ्या" इत्येव स्वीकुर्वन्ति।

संसारे मानवाः द्विप्रकारकाः भवन्ति केचन सत्याश्रयिणः केचन च असत्याश्रयिणः। सत्यनिष्ठा अनुचितं कार्यं न कुर्वन्ति। लाभः हानिः वा भवेत् ते सत्यतां कदापि न त्यजन्ति। परम् असत्याश्रयिणः उचितम् अनुचितं सर्वमपि कार्यं कर्तुम् तत्पराः भवन्ति। ते स्वकीयं लाभमेव पश्यन्ति। अपरस्य हानिं न विचारयन्ति। तेषां धनोपचयः लोकप्रसिद्धिश्च मुख्यं लक्ष्यम् भवति। ते कदाचारादपि न बिभ्यति। भौतिकं सुखमेव सर्वस्वं मन्यन्ते। परं तेषामन्त्यं फलं दुःखकारकमेव दृश्यते। कथितमपि :

अधर्मेणैधते तावत् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥

लोके परमार्थतः समुन्नतिः, कीर्तिः प्रगतिर्वा सत्याचरणेनैव सम्भवा। सत्यनिष्ठाः लौकिकम् अलौकिकम् वा वास्तविकम् अभ्युदयं प्राप्नुवन्ति। कथितं च "सत्यमेव जयते नानृतम्" "असतो मा सद्गमय"। युधिष्ठिरः सत्याश्रयणेनैव रिपूणामपि विश्वासभाजनम् अजायत। भगवान् बुद्धः सत्यमाश्रित्य लोके पूज्योऽभूत्। हरिश्चन्द्रः विविधानि कष्टानि अवाप्यापि सत्यं नात्यजत्। महात्मागान्धीः सत्यबलेनैव वैदेशिकानां हृदयं विजित्य भारतं राष्ट्रं स्वतंत्रमकरोत्। सत्यपालनं तु परमम् तपो मन्यते। विधुरेकाले मनः विचलितं जायते। मानवः अनृताचरणाय विवशः भवति। परं ये धैर्यधनाः दृढात्मानः भवन्ति ते तस्मिन्नपि काले सत्यं न परित्यजन्ति। वेदान्तिनस्तु कथयन्ति "ब्रह्मै व सत्यं सत्यमेव ब्रह्म"। बृहदारण्यके इदमेव उक्तम्। महाभारते तु सत्यस्य माहात्म्यं प्रकामं वर्णितम्।

अश्वमेधसहस्त्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेवावशिष्यते॥

एवम् अश्वमेधसहस्रादपि अधिकं महत्त्वं सत्यस्य वर्णितम्। सत्यनिष्ठाः दृढसंकल्पाः दृश्यन्ते। किमपि प्रलोभनं तान् आकृष्टुं न पारयते। ते मनः वशीकर्तुं पूर्णप्रयत्नाः भवन्ति। तेषु आध्यात्मिकं बलं स्वतः प्रवर्धते। वस्तुतः सत्यवादिन एव तपस्विनः भवन्ति। महात्मना कबीरदासेनापि सत्यं श्रेष्ठं तपः स्वीकृतम् :-

साँच बराबर तप नहीं झूठ बराबर पाप॥

सत्येनैव जगदेतत् धार्यते रक्ष्यते च। सत्यवादिनं विलोक्य अन्येऽपि जनाः श्रद्धालवः भवन्ति। सत्यवादिषु सर्वे विश्वासं कुर्वन्ति। तान् प्रति सर्वेषां प्रेमभावः जायते। सत्ये महती शक्तिः विद्यते। सत्यं पापात् रक्षति, दुःखं दूरीकरोति, बन्धनात् मोचयति। यत्र यत्र सत्यं तत्र तत्र शान्तिः, पवित्रत्वं, समृद्धिः, सौख्यं च वर्धते। जगति किञ्चिदपि दुष्करं नास्ति यत् सत्येन सम्यक् न सम्पाद्यते।

प्राचीनकाले दीक्षान्तसमारोहे प्रथमं वाक्यम् उपदेशरूपेण इदमेव उक्तम् "सत्यं वद"। एतेन वाक्येन एतदेव प्रतीयते यत् भारते मानवजीवने सत्यस्यैव प्राधान्यमासीत्। अत्रत्या संस्कृतिः सत्यप्रधानासीत्। अधुना तु संसारे सत्यस्याभावः दृश्यते। नीतिज्ञाः कथयन्ति यत् राजनीतौ समये-समये असत्यस्यापि प्रयोगः भवति। एतत् कथनं तु सर्वथानुचितम्। सर्वाणि अपि राष्ट्राणि केवलं स्वार्थम् साधयितुं यतन्ते। अतः सर्वत्र मिथ्याचरणं दृश्यते [यदि सर्वेऽपि जनाः सत्यम् अनुसरेयुः तर्हि सर्वत्र दुःखनिवृत्तिः सुखावाप्तिश्च जायेत। इतिहासावलोकनेन एतद् ज्ञायते यत् सत्यवादिनः विविधानि कष्टानि अनुभवन्तोऽपि सत्यं नात्यजन्। तेषां कृते प्राणपरित्यागः सुकरः आसीत् न तु सत्यस्य त्यागः। परं सत्यमपि प्रियमेव प्रयोक्तव्यम्। अप्रियं सत्यं न वाच्यम्। एवं प्रियमसत्यमपि नैव वाच्यम्।

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।<br>
प्रियं च नानृतं ब्रूयात् एष धर्मः सनातनः॥

प्रायः आभूषणानि शरीरं भूषयन्ति। हारादीनि आभूषणानि कण्ठं भूषयन्ति किन्तु ईदृशम् आभूषणं तु बाह्यमेव। कण्ठस्य आन्तरिकम् आभूषणं सत्यमेव। अतः एतत् सम्यक् कथितम्-

**सत्यं कण्ठस्य भूषणम्**

# शक्तानां भूषणं क्षमा

क्षमाशब्दः सहनार्थक क्षमूष् धातोःषित्वात् ''षिद्भिदादिभ्योऽङ इति।'' पाणिनीय सूत्रेण अङ्प्रत्यये परे निष्पन्नो भवति। तस्यार्थः केनाप्यपकारिणाकृत-स्यापकारस्य सहनम्। अपकारं प्रतिकर्तुं समर्थानां जनानां क्षमा तेषां भूषणं भवति। ते क्षमया शोभन्ते। क्षमा एको महान् मानवगुणोऽस्ति। स सर्वेषु मानवेषु न विद्यते। संसारे नानाविधा मानवा विद्यन्ते। खलाः साधवश्च। खलानां शक्तिः परपीडनाय साधुजनानां शक्तिः परेषां रक्षणाय जायते। शक्ताजना अपकृताः तिरस्कृता विप्रलब्धाः शप्ताअपि न तत्प्रतिकुर्वन्ति किन्तु तान् जनान् क्षमन्ते। ते महापुरुषाः जगति प्रशंसिता भवन्ति। ये शक्तास्ते प्रायेण क्षमाशीला न भवन्ति। शक्तिः क्षमा चेति परस्परं विरुद्धौ गुणौ स्तः। कविकुलगुरुः कालिदासः स्वकीये रघुवंशमहाकाव्ये महाराजदिलीपस्य गुणान् वर्णयन् कथयति -

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव॥

ज्ञानमौनादयः परस्परविरुद्धा अपि गुणास्तस्मिन्दिलीपे राज्ञि सहोदरा इव अविरोधेन स्थिता आसन्। अतः शक्तिः क्षमयैव शोभते। खलास्तु तां परपीडनेन उपयुंजते। शक्तयोऽपि नानाविधा भवन्ति - यथा विद्या-धन शक्तिः सैन्यशक्तिः दैहिकी शक्तिः तपःशक्तिश्चेत्यादयोऽनेकाः शक्तयः सन्ति। ताभिशक्तिभिरुपेता अपि साधवो जना अपकारिणं जनं क्षमन्ते। देहस्य देशाधिपतिः सहस्रार्जुनः मृगया व्याजेन महामुनेर्जमदग्नेराश्रमं जगाम । महातपाः समुनिःससैन्यस्य तस्य राज्ञः समुचितमातिथ्यं चकार। स्वदेशं प्रति निवर्तमानो नृपस्तस्य हविर्धानीं गां बलात् हृतवान्। तज्ज्ञात्वा मुनेः पुत्रः परशुरामस्तत्र गत्वा सहस्रवाहुं हत्वा तां धेनुं प्रत्यानयत्। तद्विज्ञाय क्षमामूर्तिः महर्षिः स्वपुत्रं बहुव्यगर्हयत् यत्त्वया महदनुचितं कृतम्। क्षमा एकोमहान् गुणस्तंत्वं परित्यक्तवान्। वयं क्षमया अर्हतां गताः स्मः। क्षमया लोकगुरुर्ब्रह्मापि पारमेष्ठ्यपदं प्राप। क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथाप्रभा। क्षमिणामाशु भगवान् स्तुष्यते हरिरीश्वरः॥ इत्थमपकारिण्यपि

क्षमामेवोचितां मत्वा तामेव प्रशशंस बह्वमन्यत च।

अन्यच्च नाभागनृपतेस्तनयस्याम्बरीषस्य एकादशीव्रतसमाप्तौ पारणावसरे दुर्वासामुनिराजगाम। सोऽम्बरीषेणभोजनायाभ्यर्थितो यमुनां स्नातुं गतः। पुनरागत्य राज्ञा जलेन कृतां पारणां बुद्ध्वा तस्मै भृशं चुकोप। कृतांजलिना राज्ञा बहुप्रार्थितोऽपि तं भस्मसात्कर्तुं कृत्यां निर्ममे। तं दह्यमानं विलोक्य विष्णुना प्राक् तद्रक्षायै नियुक्तं चक्रं कृत्यां दग्ध्वा तं दुर्वाससं दग्धुमभ्यद्रवत्। प्राणरक्षायै पलायमानं तं दुर्वाससं ब्रह्मरुद्रो विष्णुश्चेति त्रयोऽपि रक्षितुमाशक्ता बभूवुः। तदा विष्णुस्तं प्रोवाच - तमेव शरणं गच्छ यतस्ते भयमुत्थितम्-तथाहि ब्रह्मन् तद्गच्छ भद्रं ते नाभागतनयं नृपम्। क्षमापय महाभागं ततः शान्तिर्भविष्यति। ततोऽम्बरीषं समुपसृत्य दुर्वासा क्षमां कर्तुं प्रार्थयत्। ततःसोऽम्बरीषस्तत्कृतमपराधं क्षमित्वा स्तुत्या चक्रमशमयत्। इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम्। अशाम्यत् सर्वतो विप्रं प्रदहद् राजयाच्ञया। स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः। प्रशशंसतमुर्वीशं युंजानः परमाशिषः॥ दग्धुं प्रवृत्तमपिमुनिं क्षमित्वा तस्य प्राणान् ररक्ष। स मुनिः भुक्त्वा नृपंप्रशंसन् स्वमाश्रमं जगाम। एतस्याःसूक्तेरुदाहरणान्तरं श्रूयताम्-

महाराजः परीक्षितः मृगयार्थं वनं गतो मृगाननुधावन् श्रान्तः तृषितो भूत्वा जलार्थी एकस्य मुनिराश्रमं गत्वा तं मुनिं जलमयाचत समाधौस्थितः स मुनिस्तस्य राज्ञो याच्ञां न श्रुतवान्। तदा अप्राप्तसत्कारः स नृप आत्मानमवज्ञातं मत्वा तस्मै भृशं चुकोप। समीपेमृतमेकमुरगं धनुष्कोट्या तस्यमुनेः स्कन्धे निधाय स्वस्थानं जगाम्। तदामुनिपुत्रो राज्ञाऽवमानितं पितरं विलोक्य तस्मै शापं दत्तवान्। अद्यतः सप्तमे दिवसे तक्षकस्त्वां दंक्ष्यति। उक्तंहि इति लंघितमर्यादं तक्षकः सप्तमेऽहनि। दंक्ष्यतिस्म कुलांगारं चोदितो मे तत द्रुहम्॥ ततः समाधेर्विरतोमुनिः सर्ववृत्तं विज्ञाय बहु शुशोच। स्वपुत्रं चाभर्त्सयत्। हे अज्ञ त्वया महानपराधः कृतः। अल्पीयसि अपराधे महान् शापो दत्तः। एवं बह्वनुतापं विधाय दत्तंशापं शिष्येण राजानं सूचयामास। स सम्राट् शप्तोऽपि प्रतिकर्तुंनैच्छत् किन्तु चक्षमे। शापमंगीचकार। यतः शक्ताः क्षमयैव शोभन्ते। किं बहुना विष्णुरपि ब्रह्मणः सुतेन भृगुणा वक्षसि पदा ताडितोऽपि क्षमामेव अशिश्रियत्। त्रिषु देवेषु सर्वाधिकं महत्त्वं चालभत्।

किन्तु क्षमा न सर्वत्र लाभकारी। शत्रौ क्षमा कदापि नोचिता। लघुरपि स नोपेक्षणीयः। उक्तं च- अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न कारयेत्। स्वल्पोऽप्यग्निस्फुलिंगः सर्वं दहति तथैव स्वल्पोऽपिशत्रुर्महाहानिकरः। उक्तं च- उतिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता। समौहिशिष्टैराम्नातौ वत्स्यर्न्तावामयः स च। ध्रियते यावदेकोऽपिरिपुस्तावत्कुतः सुखम्॥

पुरःक्लिनाति सोमं हि सैंहिकेयोऽसुरद्रुहाम्॥

रिपौ विहिता क्षमा एव भारतस्य चिराय परतंत्रतायै संजाता। अन्यत्र क्षमा भूषणमेव। अतः शक्तानां भूषणं क्षमा, इति विश्वविदितस्य नीतिनिष्णातस्य चाणक्यस्योक्तिरियं सर्वथा तथ्यतामवगाहते।

शत्रु कृतापकारेण दह्यमानहृदया द्रौपदी शत्रून्प्रति उदासीनं पतिं भर्त्सयति। अथक्षमामेवनिरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम्। विहायलक्ष्मीपतिलक्ष्म कार्मुकंजटाधरः सन् जुहुधीहि पावकम्॥

# जितं जगत्केन मनो हि येन

चतुरशीतिलक्षयोनिषु जायमानप्राणिसमूहसमाकुलेऽस्मिन् चराचरे संसारे सर्वेषामेव प्राणिनां मनसि स्वोत्कर्षसाधनाय सुखानुभवाय च विजिगीषा पदं कुरुते। सर्वे जनाः स्वकुले स्वबन्धुवर्गे स्वदेशे राष्ट्रे राष्ट्रान्तरे च स्वोत्कर्षं साधयितुं प्रयत्नपराः भवन्ति। यो यदा यत्र स्वोत्कर्षं स्थापयितुं यतते तदा तमन्योऽवनमयितुं च चेष्टते। केचित्तपसा स्वोत्कर्षं साधयितुं दुश्चरं तपश्चरन्तोऽन्यान्तपोनिष्ठान् जयन्ति। अपरेऽश्वमेधादिभिर्महायज्ञैः यज्ञशीलान् जेतुमिच्छंति। केचन दानातिशयं विदधानाः महादानिनो जनान् अतिक्रामन्ति। किं बहुना विजयाय स्वप्रियतमान्प्राणानपि सहर्षं समुत्सृजन्ति। कश्चित्सत्यपरायणो महापुरुषः सत्याचरणेन सत्यवादिनो जनान् जिगीषति, कोऽपि प्रभूतवित्ताढ्यतया वित्तवतो जनान्, बाहुबलशालिनो भटा बाहुयुद्धेन, सैन्यशक्तिशालिनो नृपाः अन्यान् नृपान्, काव्यकर्मकुशलाः कवयः स्वोत्कृष्टतरकाव्येन कवीनन्यान् जेतुं वाञ्छन्ति जयन्ति च। किमधिकं साधनसम्पन्नानि राष्ट्राणि राष्ट्रान्तरं जेतुं मानवसंहारकार्यक्षमाणि शस्त्रास्त्राणि समुत्पादयन्ति। अधुनाऽपि अमेरिका प्रभृतीनि राष्ट्राणि स्वकीयशस्त्रास्त्रसमुत्पादनकौशलेन अन्यानि राष्ट्राणि जेतुमधिकर्तुं च बद्धपरिकराणि वर्तन्ते। राष्ट्रान्तरस्य शक्तिक्षयाय शस्त्रास्त्रादिभिः अन्यस्य प्रभूतं साम्राज्यं च विदधते। अपरञ्च अधुना नारीसमाजे सौन्दर्यातिशयेन सुन्दरनारीणां विजयाय सुन्दरीप्रतियोगिता अपि जन्म गृहीतवती।

इत्थं तत्तद् विजिगीषैव ताँस्तान् जेतुं नवनवानाविष्कारांश्च कर्तुं दिवानिशं कदर्थयति। तथापि ते ते समानशीलव्यसनानेव जेतुं समीहन्ते जयन्ति च न तु असमानशीलव्यसनान्यान् सर्वान्। किं पुनः सर्वं जगत् यथा कविः कवीनेव, सुन्दरी सुन्दरीरेव तपोनिष्ठस्तपस्विन एव विजयन्ते नतु अन्य गुणविशिष्टान् जनान् जयन्ति। तल्लोभस्तद्विषयिणी तृष्णा वा तान् वस्तुनः कृते नटमर्कटानिव नर्तयति।

एतदुक्तं भवति यत्तत्ताद्विषयाभिलाषिणो मानवा मोहाभिभूताः सर्वत्र धावन्ति परिश्राम्यन्ति च। अभिलाषे अपूर्णे सति खेदं ग्लानिं च प्राप्नुवन्ति। विचार्यमाणे

सति सर्वमेतत् मनसो जयाभावस्यैवदुर्विलसितम्।

अतएवास्माकं अध्यात्मनिष्ठा भारतीया महर्षिपुंगवा भौतिक विषयेभ्यो निरपेक्षा भूत्वा जगद् विजयस्य अमोघं साधनं मनसो जयमेव मेनिरे। तेष्वेव अध्यात्मपरोक्षदर्शिषु महात्मसु आचार्येषु अन्यतमो जगद्गुरुः शंकराचार्यो जगद्रूप महारोगं जेतुं मनोजयमेव अमोघं भेषजं निश्चिकाय। उक्तं च तेनैव गुरुशिष्य संवादात्मके प्रश्नोत्तरी नामके लघुकलेवरे स्वकीये काव्ये-

विद्या हि का ब्रह्मगतिप्रदा या, बोधोऽस्ति को यस्तुविंमुक्तिहेतुः। को लाभ आत्मावगमो हि यो वै, जितं जगत्केन मनो हि येन। इत्युक्तरूपस्य पद्यस्य तुरीयपाद एवात्र विचारसरणिमवगाहते। तस्यार्थस्त्वयं मनसि वशीकृते सकलं जगद् वशीकृतं भवति केन प्रकारेणेति श्रूयताम्- एतत्पांचभौतिकं कलेवरं श्रोत्र चक्षुः स्पर्शन-रसन-घ्राणाभिधानानां पंचेन्द्रियाणामधिष्ठानम्। तेषांमिन्द्रियाणां रूपरसगन्धस्पर्शशब्दा विषया विद्यन्ते। मनः सहकारेण तत्तदिन्द्रियं स्वं स्वं विषयमभिवर्तते। यथा सारथिना प्रेरिता अश्वास्तस्येच्छया तां-तां दिशमभिगच्छन्ति एवं मनः प्रेरितामेन्द्रियमश्व इव धावति। ते विषया न केवलं दुःखप्रदाः किन्तु मृत्युप्रदा अपि भवन्ति। मृगो गीतेन मधुपो गन्धेन मीनो रसेन पतंगो रूपेण विषयाः विषेण दुःखिता हताश्च भवन्ति। अतएव महात्मना बुद्धेन विषयाः विगर्हिताः तेषामनर्थकारित्वं च प्रतिपादितम्। गीतैर्ह्रियन्ते हि मृगा वधाय रूपार्थमग्नौशलभाः पतन्ति। मत्स्यो गिरत्यायसमामिषार्थी तस्मादनर्थं विषयाः फलन्ति॥ इन्द्रियाणां निग्रहात्पूर्वं मनोनिग्रह एव कर्तव्यः। मनस्यवस्थिते इन्द्रियाणि अपि निगृहीतानि भवन्ति। तथा सति न कस्मिंश्चिद् विषयेऽभिलाषो न मोहश्चोत्पद्यते। विषयेच्छैव मोहजननी भवति उक्तं च महाकविना भारविणा - मोहं विधत्ते विषयाभिलाषः।

किन्तु तस्य मनसो जयोऽतीव दुष्करोमतस्तस्यातीव चंचलत्वात् बलवत्वाच्च। अर्जुनः मोहवशात् संग्रामाद् विमुखमात्मानमुपदिशन्तं योगेश्वरं श्रीकृष्णं प्रति पृच्छति- चंचलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥

तदुक्तिमनुमोदमानो भगवान् श्रीकृष्णः मनोजयोपायमुपदिशति। असंशयं महाबाहो मनो दुर्निग्रहं चलम्। अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते

यतो यतो निश्चरति मनश्चंचलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्॥

इत्थं दुर्निग्राह्यमपि मनोऽभ्यासेन विषयविरागेण च जेतुं शक्यते। मनसि जिते आशातृष्णारागद्वेषमोहादयः सर्वेऽन्तःशत्रवोऽपि जिता भवन्ति। तस्यां स्थितौ यत्सुखमनुभूयते तद् जगज्जयिनो सम्राजोऽपि नानुभवितुं शक्नुवन्ति। भौतिकबलेन संसारं जित्वाऽपि न सा शान्तिर्लभ्यते या अध्यात्मबलेन मनोमात्रजयेन लभ्यते अयमर्थस्तत्वज्ञैरनेकधा कथितः कवीश्वरैः-

आशा नाम नदी मनोरथजला तृष्णातरंगाकुलाः।
राग ग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी॥
मोहावर्तसुदुस्तरातिगहना प्रोत्तुंगचिन्तातटी।
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥
अन्यच्च-आशाया ये दासास्ते दासा सर्वलोकस्य।
आशा येषां दासी तेषां दासायते लोकः॥

दुकूलैः प्रासादैः साम्राज्यलक्ष्म्या च यत्सुखं न प्राप्यते तन्निगृहीतमनसोविरागिणः प्राप्नुवन्ति। उक्तं च केनचित् - वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या

सम इह परितोषो निर्विशेषो विशेषः।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥

महात्मना चाणक्येनाप्यनुमोदितोऽयमर्थः-

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्॥

इत्थं संसारतापसंतप्ताः शान्तिमवाप्तुकामा मुनयः मनोजयाय समीहन्ते न तु

सम्राड्भिरुपभुज्यमानपदार्थेभ्य: युध्यन्ति। ते स्वर्गराज्यमपि तृणाय मन्यन्ते उक्तं च शान्तिप्राप्तिसमुत्सुकेन बुद्धेन -

अहं हि संसार शरेण बिद्धो विनिःसृतः शान्तिमवाप्तुकामः।
नेच्छेयमाप्तुं त्रिदिवेऽपि राज्यं निरामयं किं बत मानुषेषु॥

अतः संसारासारतामधिगम्य ब्राह्मीस्थितिमधिगतानां श्रीमच्छंकराचार्यपादानामियममृतमयी भणितिः सर्वथा सत्यैव-

**जितं जगत्केन मनो हि येन।**

# वेदांगानि

वेदस्य वेदानां वा अंगानि वेदांगानि। वेदशब्दार्थश्च कः इति प्रश्ने उदिते वेद शब्दः विद् धातोर्घञ्प्रत्यये कृते निष्पन्नो भवति। विद्धातोश्चत्वारोऽर्थाः-विद् ज्ञाने, विद् सत्तायाम्, विद्लृलाभे, विद्विचारणे विदन्ति जानन्ति अनेन इति वेदः। विद्यन्ते भवन्ति यैर्येषु वा ते वेदाः। विन्दन्ति लभन्ते यैर्वा ते वेदाः, विदन्ति विचारयन्ति यैर्येषु वा ते वेदाः इति महर्षिदयानन्दः ऋग्वेदभाष्यभूमिकायां वेदपदार्थं स्पष्टी चकार। तेन मंत्रग्रन्थाः ब्राह्मणग्रन्था आरण्यकोपनिषदो धर्मसूत्रादयश्चसर्वे एव वेदशब्दाभिधेया भवन्ति।

गच्छता कालेन वेदशब्दः केवलं ऋग्यजुः सामाथर्वाणामेव बोधकः संजातः। ब्राह्मणादि ग्रन्था वेदवाच्याः सन्तोऽपि मूलवेदेभ्यो भिन्नाबभूवुः। चतस्रः संहिता एव वेदपदवाच्यत्वेन प्रसिद्धा अभवन्। तपःपूतमानसा महर्षयो यज्ज्ञानं साक्षात् कृतवन्तस्तदेव ऋषिदृष्टं ज्ञानं वेदार्थभूतम् सांगेभ्योवेदेभ्य एव समस्तानामार्य-शास्त्राणामुद्गमो भारतीयज्ञानस्यविकासश्चाभवत्।

भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्धयति। गच्छति काले वेदानामनेकाशाखाः सम्प्रदायाश्च विकसिताः तदाह कृष्णद्वैपायनो व्यासः शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्। वेदार्थज्ञानाय वेदांगज्ञानमपेक्ष्यते- यथा केनाप्यंगेन हीनो देही सम्यक् कार्यं कर्तुं न क्षमते तथैव अंगज्ञानशून्यो जनः वेदार्थं बोद्धुं न प्रभवेत्। अंगहीनो यथादेही सर्वकर्मसु नक्षमः। वेदांगश्ज्ञानशून्येन वेदार्थो नैव बुध्यते। शिक्षा, कल्पसूत्राणि, व्याकरणशास्त्रम्, निरुक्तं, द्न्दः शास्त्रं, ज्योतिः शास्त्रंचेति वेदस्य षडंगानि। तदुक्तमभियुक्तैः ब्राह्मणेन निष्कारणो धर्मः षडंगोवेदोऽध्येयो ज्ञेयश्च। शिक्षा कल्पो व्याकरणं निरुक्तं इन्दसां चयः। ज्योतिषामयनं चेति वेदांगानि वदन्ति षट्। गोपथब्राह्मणे बौधायनादिधर्मसूत्रेषु वाल्मीकीये रामायणे च एतेषामुल्लेखं उपलभ्यते। वेदरूपस्य देहिनः शिक्षादयः किं किमंगमित्यपि स्पष्टीकृतम्-

शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते।
छन्दः पादौ तु वेदस्य मुखं व्याकरणं स्मृतम्।

एषां वेदांगानां ज्ञानमन्तरेण वेदानां ज्ञानं दुःशकमेव। केन केन वेदांगेन कीदृग्ज्ञानं जायते इत्युच्यते शिक्षाशास्त्रं तु वेदानामध्ययनाध्यापनप्रकारं समुच्चारणविधिं बोधयति। कस्य वर्णस्य कण्ठादिषु स्थानेषु कतमदुच्चारणस्थानं यथा इचुयशानां तालु अकुहविर्सजनीयानां कण्ठः इत्यादि।

यस्य वर्णस्य यदुच्चारणस्थानं तेनैव तस्योच्चारणं फलाय प्रभवति तद्विपरीतमश्रेयसेसंजायते तदुक्तं पाणिनीयशिक्षायाम्- अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च। सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते। सम्यगनुच्चरितवर्णो भ्रष्टस्वरश्च मंत्रो न मनीषितार्थाभिधाने क्षमः प्रत्युत प्रोच्चायितुरकल्याणं च विधत्ते तदुक्तं शिक्षायां-मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्॥ पुराकाले त्वष्टा इन्द्रस्य वधाय सुतं जनयितुं आभिचारिकं यज्ञमकरोत्। तदोच्चारिते मंत्रे स्वरदोषेण इन्द्रेण वध्यः सुतो वृत्रनामा समजायत। अतो वर्णानांसमुचितस्थानोच्चरणाय सम्यक् स्वरादि प्रयोगाय अध्ययनादिविधि परिज्ञानाय च शिक्षाशास्त्रमवश्यमध्येयम्।

समये-समयेऽनेके महात्मानो मुनयः शिक्षाशास्त्राणि प्रणीतवन्तस्तेषु जैगीषव्य शिष्यो बाभ्रव्यः प्रथमः शिक्षा शास्त्र प्रणेता प्रोच्यते ततोऽनेके पाणिनिः गौतमोनारदः भारद्वाजः माण्डूकिश्च शिक्षानिर्मातारो बभूवुः। तन्निर्मितासु शिक्षासु द्वित्राः एव शिक्षाः साम्प्रतं प्राप्यन्ते। अन्याश्च कालग्रस्ता अभूवन्।

द्वितीयं हस्तस्थानीयमंगम् कल्पसूत्राणि तानि वेदांगेषु प्राचीनतमानि विदुः। तानि विधिं नियमान् न्यायं कर्मदेशादीनर्थविशेषांश्च बोधयन्ति। कल्पग्रन्थाः कल्पसूत्रानाम्नापि प्रसिद्धा सूत्र शब्दः संक्षिप्तार्थसूचकः तानि कल्पसूत्राणि अनुष्ठातव्य कर्मणां रीतिं व्यवस्थां विविधप्रकारांश्च संक्षेपेण विवेचयन्ति। तेन तेषां यज्ञादि कर्मसु महती उपयोगिता, वेदांगेषु विशिष्टं स्थानं च वर्तते। कालगत्या वेदानां दुर्बोधतायां जातायां तत्सुखबोधाय वेदोक्तविधीनां परिज्ञानाय च कल्पसूत्राणि नितान्तमुपयुज्यन्ते। तेषां भाषा शैली भावाश्च वैदिक साहित्याद् भिन्ना एव लक्ष्यन्ते, साहित्येनवयुगारभं कुर्वन्ति च। कर्मणां विधयः संस्काराः संस्कारस्वरूपाणि यज्ञानुष्ठानविधयश्च विषयभूताः सन्ति।

अयं यज्ञो भुवनस्यानाभिः - इत्यादिना अथर्ववेदे यज्ञादेव जगदुत्पत्तिः कथिता तं यज्ञं वर्हिषि प्रौक्षन्पुरुषं जातमग्रतः इत्यादिना च। कल्पग्रन्थैः प्राचीनभारतीय जनानां कर्मपरायणता सात्त्विकजीवनं अपरिमिता मेधाशक्तिश्चावगम्यते। तेषां विभागोऽपि श्रोतसूत्र - गृह्यसूत्र-धर्मसूत्रभेदेनत्रिविधोऽस्ति एतेषु कतिपयान्येव साम्प्रतमुपलब्धानि भवन्ति इतराणि कालकवलितानि। श्रौतसूत्रेषु यज्ञविधिवर्णनम्, गृह्यसूत्रेषु गर्भाधानादिसंस्काराः धर्मसूत्रेषु आश्रमधर्मा - स्तेषामाचारादिनिरूपणं च मुख्यतमाः प्रतिपाद्याः विषयाः सन्ति। दुःखबोधस्य वेदार्थस्य सुखबोधाय कल्पसूत्राणामुपयोगोऽस्ति। तृतीयं वेदांगं व्याकरणं वेदस्य मुखरूपत्वात्षट्स्वंगेषु प्रधानम्। प्रधाने च कृतो यत्नः फलवान् भवतीति महर्षि पतंजल्युक्तेः वेदानां ज्ञानाय व्याकरणंमुख्यं साधनम्। कालगत्या ह्रसितमेधसां जनानां वेदार्थबोधाय, तद्रक्षणाय च व्याकरणाध्ययनमनिवार्यम्, तथा चाह महाभाष्ये पतंजलिः रक्षोहागमलध्वसंदेहाः प्रयोजनम्, रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञोहि सम्यग्वेदान्परिपालयिष्यति। इत्थं व्याकरणं लौकिक-वैदिकशब्दानां च व्युत्पत्ति तेषां प्रयोगं च शिक्षयति। व्याकरणशास्त्रनिर्मातारश्चानेके वैयाकरणा बभूवुर्यथा इन्द्रः आपिशलिः शाकटायनः चन्द्रः पाणिनिश्च। तेषु पाणिनिस्तन्निर्मिता अष्टाध्यायी च व्याकरणजगति परमां प्रसिद्धिं प्राप्नुतः स्म। किं बहुना प्राक्तनाः नवीनाश्च केचनापि व्याकरण ग्रन्थाः प्रचारे प्रमाणिकतायां च अष्टाध्याय्याः समाना न सन्ति।

वेदशरीरस्य श्रोत्रस्थानीयं निरुक्तमपि वेदे प्रयुक्तानां दुरूहार्थशः व्युत्पत्या सह तेषामर्थं बोधयति। निरुक्तज्ञानाय व्याकरणज्ञानं सर्वत्रापेक्षितं भवति, व्याकरणज्ञानं विना निरुक्तशास्त्रं दुर्बोधम्। निरुक्तं तु अयं छन्दः अस्मिन्विशिष्टार्थे रुढः इति हेतु प्रदर्शनपूर्वकं बोधयति। यथा- वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम्॥

वेदरूपस्य देहस्य छन्दः पादरुपमंगम। यथा पादाभ्यां विना शरीरस्य गतिर्नभवति तथा छन्दसा विना वेदस्य लयबद्धा गतिर्न जायते। कुत्रविरामः कुत्रनेति ज्ञानं छन्द एव कारयति। छन्दयतीतिछन्दः, छन्दयति आल्हादतीति वा छन्दः इत्यादि व्युत्पत्या मन आल्हाकारिणी छन्दोमयी वागेव वेदशब्देनाभिधीयते।

गायत्री, त्रिष्टुप्, जगती, बृहती, पंक्तिः इत्यादीनि बहूनि छंदांसि सन्ति। तानि छन्दांसि यज्ञेषु असुरैर्जनिताद् दोषात् स्वप्रभावेण सैनिका इव निवारयन्ति।

भगवान् भव एव छन्दःशास्त्रप्रवर्तकः प्रोक्तः, स बृहस्पतये छन्दःशास्त्रं प्रोवाच ततोऽन्ये लब्धवन्त इति शिष्य परम्परयाप्राप्तं छन्दोज्ञानं अधुनावधिविराजते।

ज्योतिषं- वेदस्य चक्षुःस्वरूपं वर्तते चक्षुर्भ्यां विकलो जनः कांचिदपि क्रियां यथातथं विधातुं न शक्नोति। यथा चक्षुः सकलं वस्तुजातं प्रत्यक्षी कारयति तथैव यज्ञादिषु अपि कालज्ञानमपेक्षितं भवति।

ज्योतिः शास्त्रेण कालं विज्ञाय वेदविहिता यज्ञा अनुष्ठीयमानाः सफला भवन्ति काले सर्वं फलतीति ग्रहाणां ज्ञानपूर्वकं यज्ञकालज्ञानं जायते। उक्तं च- वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः। तस्मादिदं कालविधानशास्त्रम्।

# वीराः सम्भावितात्मानो न दैवं पर्युपासते

सूक्तिरियं महर्षिवाल्मीकेः आदिकाव्यात् रामायणादुद्धृतास्ति। वीराग्रणी रामानुजस्य लक्ष्मणस्यमुखाद् विनिःसृताऽस्ति। आत्मसंभाविता वीरपुरुषाः कदापि दैवं भाग्यं दिष्टं वापरपर्यायमवलम्ब्य तदधीना भूत्वा न तिष्ठन्ति। तात्पर्यमिदं यदस्मिन्नतिविचित्रपरम्परावाहिनि संसारे नानाविधविचारशालिनो मानवाः वर्तन्ते। केचन भाग्यवादिनो जनाः दैवाधीनमेवसर्वं विधेर्विधानं चक्रवत्स्वयमेव परिवर्तते। कस्यापि स्वार्थस्यसिद्धये कस्यचिदुद्यमस्य कापि आवश्यकता नास्ति। नच कस्यापि साहाय्यस्यापेक्षा भवतीति निश्चयपरा यद्भावि तत्स्वयमेव भविष्यति इति विश्वस्य कर्म 'परित्यजन्ति। ते' चैरवेति चैरेवेति इति श्रुतेर्घोषं न शृण्वन्ति। दैवाधीनमेव सकलं सिद्धिजातं तदर्थं नास्ति कर्मणः उद्योगस्य वा आवश्यकतेति भाग्यवादिनां कापुरुषाणां मतं वीरासंभावितात्मानो न मन्यन्ते। यतो हि तयानेके दोषाः समुद्भवन्ति। देववादिनो जनाः कर्मत्यागेन अलसाः कर्मभीरवो अकर्मण्याश्च जायन्ते। ते कर्माचरणाद् विभ्यति। केवलं परावलम्बिनो भूत्वा जीवनं यापयितुं वाञ्छन्ति। स्वावलम्बनमात्मनिर्भरतादया सद्गुणास्तेभ्यो दूरंगता भवन्ति। यतोहि आलस्यं तेषां कलेवरे गृहं कृत्वा तिष्ठति। तदेव तेषां प्रगतिपथे सदाबाधकं च भवति। तेषां भाग्यवादिनां भविष्यं बालुकाभित्तिरिव भवति यत्स्वल्पेनैवाघातेन धराशायि सम्पद्यते। अलसा जनाः स्वकार्यस्य असफलतायां जातायां देवे ईश्वरे भाग्ये वा दोषमारोपयन्ति। उक्तं च - 'आलस्यं हि मनुष्याणां शरीरस्थो महानूरिपुः। नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति॥'

ये अपरे पौरुषवादिनो जनास्ते कर्मवीरा अनलसाश्च भवन्ति। ते संसारे धर्मार्थकाममोक्षरूपस्य पुरुषार्थचतुष्टयस्य प्राप्तये संघर्षं कृत्वा स्वाभीष्टप्राप्तिं कुर्वते। तेषामयमुद्घोषः-हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्। अथवा युध्यस्व विगतज्वरः। ते जीवने एनमेव सिद्धान्तं स्वीकुर्वते। यदा भगवान् रामचन्द्रः रावणेन सह योत्स्यमानो बभूव तदा तस्य मार्गे समुद्रो बाधकोऽभवत्। मार्गप्रदानाय बहुशः प्रार्थितोऽपि जलनिधिस्तस्मै पारंगन्तुं मार्गं न ददौ। तदालक्ष्मणः क्रुद्धः सन्नुवाच- दैवमालम्ब्य न स्थातव्यम्। शक्तिप्रयोगो विधीयताम्। संभावितात्मानो

दैष्टिकतां नाद्रियन्ते।

ये मानवाः पौरुषे उद्यमे कर्मणि च विश्वसन्ति। तान् सर्वसम्पदः स्वयमेव वृणते। संसारेऽनेके महामानवा अभूवन् ये दैवं निहत्य पौरुषोपासका भूत्वा स्वहस्तेन सफलतामन्दिरं निर्मितवन्तः। ईश्वरचन्द्रविद्यासागरः विश्वन्द्यो महात्मागान्धीः मदनमोहनमालवीयः महापुरुषा अभवन्। एतान् को न जानाति। निर्धनतायामेव एतेषां पालनं पोषणं जातम्। स्वपुरुषार्थबलेनैव स्वजीवनमुन्नतिशिखरं नीतवन्तः। पुरुषार्थपीयूषपानेन ते अमरतां गताः। नास्ति तेषां यशः काये जरामरणजं भयम्। इत्थं पौरुषे बद्धादराः सुनिश्चितं स्वलक्ष्यसिद्धिं लभन्ते। विषमात् विषमतरा अपि परिस्थितयो न तान् विचालयितुं प्रभवन्ति। पौरुषबलेन ताजमहलनाम्ना ख्यातं विश्वविख्यातं सुन्दरं समाधिभवनं जनैनिर्मितम्। महाराजो भगीरथ; कठिनपरिश्रमेण उद्यमेन तपसा च भगवतीं भागीरथीं भूतलमानिनाय। कर्मसु कृतादरा जनाः स्वावलम्ब एको महान् गुणः महारत्नं चास्ति। स्वावलम्बिजनेषु आत्मोसाहः प्रादुर्भवति। तेन ते सकला बाधा पादेनाक्रामन्ति। समुन्नतिलक्ष्यं च प्राप्नुवन्ति। वस्तुतस्तु पौरुषं दैवं चोभयं समुदितं कार्यं साधयति न केवलं दैवं नच पुरुषकारः। यथाहि एकेन चक्रेण रथो न गन्तुं शक्नोति तथैव केवलेन दैवेन पुरुषार्थेन वा सिद्धिर्नसंपद्यते। उक्तं च- यथाह्येकेन चेक्रण न रथस्य गतिर्भवेत्। एवं पुरुषकारेण विना दैवं न सिध्यति॥ एवमुद्यममहिमा भृशं गीतो बुधैः-

उद्यमी लभते सिद्धिमयोग्योऽपि सुनिश्चितम्। अनूरुर्गगनस्यातं प्रयात्येव दिने दिने॥ उद्यमबलेनैव भारतीया जनाः स्वदेशं परतंत्रतापाशान्मोचयित्वा स्वतंत्रमकार्षुः। उद्यमेनैव मानवाः चन्द्रलोकमप्याक्रान्तवन्तः। उद्यमेनैव पूर्वं जडमतिः पाणिनिः व्याकरणग्रन्थमपूर्वं निर्ममौ। उद्यमं विना वने मृगेन्द्रोऽपि स्वोदरपूरणे समर्थो न भवति। उक्तं च- उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः। न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥ श्रीमद्भगवद्गीतापि मोहाभिभूतस्यार्जुनस्य मोहजालं छित्वा कर्म कर्तुं प्रेरयति स्म। इत्थं कर्मैवसिद्धि- प्रदायकं सततं कर्म कर्तव्यम् इति समुपदिशन्ती पौरुषस्य प्राधान्यं प्रकटयति।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः। कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं

कृतम्॥ संस्कृतसाहित्ये प्रसिद्धा सूक्तिरियं उद्योगस्य प्रशंसां विदधाति- उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते न यदि सिध्यति कोऽत्रदोषः। किं बहुना दैवोपासकेषु अनेके दोषाः पदं कुर्वन्ति। पौरुषेचानेके गुणाः। अतः सुष्ठूच्यते- 'वीरा संभावितात्मानो न दैवं पर्युपासते' इति।

# स्ववीर्यगुप्ता हि मनोः प्रसूतिः

"स्ववीर्यगुप्ता हि मनोः प्रसूतिः" सूक्तिरियं रघुवंशमहाकाव्यीया युज्यते सर्वथेत्यत्र कस्य नाम विप्रतिपत्तिर्भवितुमर्हति? विवेकिनः? यतो हि सन्ति ब्रह्माण्डभाण्डोदरेऽस्मिन्, विशेषतो प्राणिन सामान्येन कोटिचतुरसीतिसंख्ययेति सुप्रसिद्धं भारतीयसंस्कृतिसाहित्यविदाम् समेषाम्। अतएव सम्बोध्य भगवन्तं नन्दनं प्रोक्तं भक्तेन केनचिच्चतुरतरेण-

आनीता नटवन्मया तव पुरः श्रीकृष्ण या भूमिका
व्योमाकाश खखाम्बराब्धि वसवस्त्वत्प्रीतयेऽद्यावधि।
प्रीतो यद्यसि तान्निरीक्ष्य भगवन्! मत्प्रार्थितं देहि मे
नो चेद्ब्रूहि कदापि मानय पुनर्मामीदृशीं भूमिकाम्।

अत्रोक्ता व्योमाकाशखखाम्बराब्धि वसवो भूमिका अवश्यं मन्तव्याः कोटिचतुरशीतियोनय एव, संगत्यभावप्रसंगदुर्वारतापत्तिभिया। सत्यां चैतस्यां परिस्थितौ वास्तविक्यां प्राणिषु तावत् तत्तद्योनिभवेषु स्यात्तारतम्यमपि मन्तव्यमेव सापेक्षाभ्यां परत्वापरत्वाभ्यां श्रेष्ठात्वाश्रेष्ठत्वापरपर्यायाभ्याम्। भूताणुत्वतारतम्यस्य परमाणुषु ननु पार्थिवाथ तैजसवायवीयेषु, भूतमहत्तत्त्वतारतम्यस्य च परममहत्याकाशे विश्रान्तिरिव प्राणिगतयोः श्रेष्ठत्वाश्रेष्ठत्वयोरपि तारतम्यस्य क्वचिद्विश्रान्तिर्विभ्रान्तिर्मन्तव्यैव तारतम्यत्वाविशेषात्। विधिनिषेधातिशयस्य त्यागश्रमयोग्यत्वाधीनतया त्यागश्रमयोग्यत्वयोश्च बोधातिशयाधीनत्वेन, यज्जातीयेषु प्राणिषु बोधातिशयः तज्जातीयानामेव तेषां श्रैष्ठ्यं सर्वातिशायीति पर्यवसितं भवति फलतः। बोधातिशयस्य ननु तृणलतागुल्माद्यारभ्य मानवान्तेषु सर्वेषु प्राणिषु मात्रया वृद्धिमापद्यमानस्य विश्रान्तिर्मानवजातीय एवेतिशक्यत एव साधु समवगन्तुं सर्वैर्विषयेऽत्र दृष्टिं स्वकीयं निःक्षिपद्भिः। यतोहि धर्मार्थकाममोक्षाख्यानां पुरुषार्थानां चतुर्णांमध्ये कस्याप्येकस्य कृते भवन्ती प्रवृत्तिस्समवलोक्यते मानवजातीय एव कस्मिंचिन्नान्यजातीयेषु प्राणिषु क्वचिदपि कदाचिदपि च। ततस्तत्प्रवृत्तिमूलभूतो बोधातिशयो मानवेष्वेव नान्यजातीयेषु सर्वाधिक इति विनिश्चयः। यदिकश्चिदत्रैवं

ब्रूयात्,-यत् कामप्रवृत्तिस्तु सर्वेष्वेव प्राणिषु भवन्ती समवलोक्यते नन्वाकीट पतङ्गमिति कथमुपपद्यते कथनमेतत् यत् पुरुषार्थेषु चतुर्षु जायमाना प्रवृत्तिर्मानवेष्वेव समवलोक्यत इति ?

तत्रेदं प्रतिवचनं समवगन्तव्यं यत् प्रकृता हि धर्मार्थकाममोक्षशब्दाः योगरूढात्मका एव विवक्षिता न केवलं योगिकाः अन्यथा धार्यमाणानां धारकाणां च सर्वेषां वस्त्रगृहादीनां धर्मत्वस्य, अर्थ्यमानानां समेषामर्थत्वस्य, काम्यमानानां सर्ववस्तूनां कामत्वस्य, रज्जुबन्धनादि विगमानामपि मोक्षत्वस्य चापत्ते दुर्वारिता प्रसंगात्। नहि प्रसंगोसाविष्ट एवेत्यपि शक्यंवक्तुं पुरुषार्थैक शेषतापत्तिभिया। तथा च लौकिक शास्त्रीभ्याभ्यां विधिनिषेधाभ्यां नियन्त्रितस्यैव स्त्रीपुम्मोक्तस्य प्रकृतिकाम पदार्थतयातत्र भवन्त्याः प्रवृत्तेरमानवेषु सम्भवयोग्यत्वाभावेन युज्यते कथनमुक्तं सर्वथा यत् पुरुषार्थचतुष्टय प्रवृत्तिर्मानवानामेव भवति नामानवानामिति।

इदमपि तावदत्रावधेयम्- यत् सकलप्राणिसाधारणस्त्रीपुम्भोगमात्रस्य प्रकृतकामपदार्थत्वाभ्युपगमे पुरुषार्थसंज्ञापि नोपपत्तिमीयात्तस्य। पुरुषार्थशब्द घटकस्य पुरुषपदस्य मानवमात्रपरत्वात्। अतएवैतरेयोपनिषदि प्राणिसृष्टि-प्रतिपादनस्थले "स ईक्षतेमेनुलोकाः लोकपालान्नुसृजा इति, सोद्भ्य एव पुरुषं समुद्ध्यन्त्यामूर्च्छयत्" इत्यनन्तरं "ताभ्यां गामानयत्, ता अब्रुवन् नैव नोऽयमलमिति। ताभ्यः पुरुषमानयत्। ता अब्रुवन् सुकृतं वतेति। पुरुषो वाव सुकृतम्। ता अब्रवीत् यथायतनं प्रविशतेति, चाख्यायिका संगतिमेति सर्वथा।

तथापि सृष्टिसमये किंविधिं शरीरं भवद्भ्यः स्थितये रुचिकरामित्यभिप्रायेण गवाश्वादिशरीरे प्रथमं जीवात्मनां पुरतः परमेश्वरेण सृष्टिकर्त्रा समुपस्थापिते तत असन्तुष्टेषु तेषु जीवात्मसु यदा मानवशरीरं निर्माय जीवात्मभ्यस्तेभ्यः प्रदर्शितं स्थितये तेषां तदा साधुनिर्मितं भवता निवासाय ननु स्थानमेतदस्माकमिति भणन्तस्ते जीवात्मानो नितरां बभूवुस्सन्तुष्टा इति स्फुटं प्रतिपादनेन सकल- पुरुषार्थोपयोगितया सर्वान्यप्राणिशरीरापेक्षया मानवशरीरस्यैव प्राशस्त्यमिति लभ्यते ननु सुविहितं यतः प्रतिपादनम्। तदतिरिक्तमितोऽपि हेतोर्युज्यते नन्वेतत् यत् याः काश्चन प्रवृत्तयस्समवलोक्यन्ते भवन्त्यः प्राणिनाम् वस्तुतस्सूक्ष्मेक्षिकया विहिते विवेचने

सर्वारतास्वरक्षणायैव भवन्ति विधीयमानाः। वास्तविकी स्वरक्षाच स्वकीयाभ्यस्सत्प्रवृत्तिभ्यो मानवैर्यथा शक्यते विधातुं न तथान्येन प्राणिना केनचिदिति सुस्पष्टं समनुभूयत एव जनैस्सर्वैः।

महान्तोऽपि व्याघ्रगजोष्ट्रहयसिंहादयो मानवेतर प्राणिनो लभ्यन्त एव हि मानवैर्बद्धाः पालिताः। नच क्वचिदवलोक्यते खल्वेकोऽपि मानवो बद्धः पालितस्तैरमानवैः प्राणिभिः। कारणं तत्रेदं यद्रक्षाहि भवति बलाधीना। बलं च भवति चतुर्विधं शारीरमार्थिकं वाचिकं बौद्धं च संक्षेपतः। सर्वं चैतद्बलं सम्भूय तिष्ठति यथा मानवे न तथाऽन्यत्र कुत्रापि प्राणिनि। व्याघ्रगजोष्ट्रसिंहादिषु शारीरबलाधिक्येऽपि न बलयोर्वाचिकबौद्धयोस्तथा विकासो यथा मानवेषु। आर्थिकस्यतुबलस्य सर्वथा नन्वभाव एवामानवेषु प्राणिष्वसञ्चयिषु। अतो मानवानेवाधिकृत्य प्रोक्तं भगवता पार्थसारथ्यं विदधता श्रीकृष्णेन श्रीमद् भगवद्गीतायाम्-

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ इति ॥

तथ्यं सर्वमेतद्वास्तविकं मनसि निधायैव रघुवंशमहाकाव्यस्यद्वितीये सर्गे वसिष्ठधेनु नन्दिन्याक्रामकसिंहेन सह राज्ञो दिलीपस्य संवादावसरे दिलीपोक्तितया प्रोक्ता सूक्तिरियं कविकुल चूडामणिन. कालिदासेन - 'न चान्यतस्तस्य शरीररक्षा स्ववीर्य- गुप्ता हि मनोः प्रसूतिरिति। मनोः प्रसूतिर्यतः स्ववीर्यगुप्ता अतः तस्य शरीररक्षा अन्यतो नेत्यर्थः। मनोः प्रसूतिः स्ववीर्यगुप्ता, इत्यस्य मानवः स्वकीयेनैव बलेन रक्षितो भवति नान्यदीयेन बलेन कदाचिदपीति सरलार्थः।

अयं भावः योग्यतया प्रत्येकस्य मानवस्य शरीरं द्विविधं भवति रसासृङ्मासमेदोऽस्थिमज्जाशुक्रादिभयं षाट्कौषिकं भौतिकमेकं सत्कृत्यार्जितं अभौतिकं यशश्शरीरश्चापरम्। तत्राधिकशारीरबलवता मानवेतरेण प्राणिना केनचित् कस्यचिन्मानवस्य प्रोक्तभौतिक षाट्कौशिक शरीरनाशे कृतेऽपि तस्य सत्कृत्यार्जितं यशश्शरीरं न नश्यति। तदक्षुण्णमेव तिष्ठत्याचन्द्रार्कम् यावदसौ स्वयमेव न नाशयति तत् स्वकीयैरवासद्भिराचरणैः। अतो मानवयशश्शरीरस्थिति

नाशौ सर्वथा स्वाधीनौ। नेयं परिस्थितिरमानवानां प्राणिनां मध्ये कस्यापि।

एवं च मांसशोणितास्थ्यादिमये मम शरीरे त्वया हिंसैकवृत्तिना भक्षितेऽपि "दिलीपेन गवार्थं प्राणा दत्ता" इति यशश्शरीरं मम स्थास्यत्येव। गामिमां नन्दिनीं भक्षणाय तुभ्यं समर्प्य यदिनश्वरस्यास्य भौतिकस्य शरीरस्येदानीं विधीयते त्वत्तो मया रक्षा तर्हि स्वकीयं यशश्शरीरं स्वयमेव मया नष्टं स्यात्। भौतिकं शरीरं तु स्वतो विनश्वरम्। एतदतिरिक्तं त्वादृशाः प्राणिनो मानवभक्षका भवितुमर्हन्ति न मानवरक्षकाः। येहि सर्पव्याघ्रसिंहादयस्स्वजातानपि भक्षयन्ति स्वभावतस्ते मानवभक्षिणस्स्युरत्र किं नामश्चर्यम्। सत्स्वपि त्वादृशेषु हिंस्रजन्तुषु यज्जीवति मानवजातिस्तत्र हेतुस्तदीयं बलमेवेत्यद्यपि बहु महाकवेरभिप्रेतमवगम्यत इत्यास्तामिदानीमेतावदेव।

# शब्दतत्त्वं यदक्षरम्

भूतलेऽस्मिन् सर्वव्यवहारसाधनीभूतं किमपि शब्दाख्यं ज्योतिः। यदि नामेदं ज्योतिर्नोद्भासयेत् नूनं सर्वेऽपि संव्यवहारा आमूलकूलम् उच्छिद्येरन्। शब्दं विना बोधयितुम् इष्टस्य अर्थस्य उपस्थापनं नैव सम्भवेत्। किं बहुना सम्मुखमवास्थितेषु पदार्थेषु कथञ्जिद् अङ्गुलिनिर्देशादिना ज्ञापित्तेष्वपि परोक्षवृत्तीनां बोधौपयिकं दुश्शकमेव लब्धुम्। अनुन्मिषति खलु शब्दज्योतिषि न सा काऽपि शक्तिर्यया विवेकवतामुच्चविचारान् बुद्धिमन्तोऽपि ज्ञातुं समर्था भवेयुः। येषां पुनर्वेदादिशास्त्राणां वक्तारो द्रष्टारश्च अतिचिरन्तनाः तेषामवगमोपायस्तु दूरापास्त एव।

अस्मिन्नेव शब्दज्योतिषि शास्त्राण्यशेषाणि, विविधानि ज्ञानानि, सकलाश्च कला अवतिष्ठन्ते। इदमेव अर्थभावेन घटादिरूपं प्राप्य लोके समुद्भासते। यतः प्रतीतिविषयस्य नामरूपात्मकस्य सर्वस्य विश्वस्य निबन्धिनी शक्तिः शब्देष्वेवाश्रिता। सर्वा अपि अर्थजातयो गोत्व-वृक्षत्व-शब्दत्वादयः सूक्ष्मं वाक्तत्त्वमेवाश्रित्य समुपतिष्ठन्ते। ताश्चस्वाभिव्यञ्जकं वाक्तत्त्वरूपं यदधिष्ठानं तस्य शब्दार्थाकारपरिणामेन स्वाभिव्यक्तिं प्रतिपद्यमानाः वाच्यवाचकभावभेदेन प्रतीयन्ते। तदेवं वाक्तत्त्वं वाच्यवाचकरूपस्य विश्वस्य निबन्धनमेव। एतत् सर्वं विचार्य भर्तृहरिः स्वकीये वाक्यपदीये सम्यगेव अभिहितवान्-

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते।"

तथैव च स महामुनिः बुद्धिस्थस्य अर्थसंश्लिष्टस्य शब्दतत्त्वस्य बहिः प्रकाशनसमर्थां विशिष्टां शक्तिं सम्यगुपपादयन् एवमाह-

"अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्।
तद्वत् शब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्॥"

एवं च सर्वोऽयं दृश्यप्रपञ्चः शब्दस्यैव विवर्तः। स च शब्दो वैयाकरणानां नये यद्यप्येकोऽखण्डश्च तथापि पदं वाक्यं जपाकुसुमादिलौहित्य- पीतत्वादि-व्यञ्जकोपरागवशात् लोहितः पीतः स्फटिक इति भानवद् वर्णरूपो वाक्यरूपश्च

भासते। वर्णाः पदानि च असत्यानि, वाक्यमेव अक्रमम् अपूर्वापरम् एकं नित्यं च सत्यम्। व्यञ्जकसादृश्याच्चु शब्दान्तरग्रहणाभिमानः। तस्मिन्नेव वाक्ये अतत्त्वभूता वर्णपदरुपनिर्भासाः क्रमवत्यो बुद्धय उत्पद्यन्ते, न परमार्थतः वर्णाः पदं च नाम किञ्चित्। अत एव महर्षिणा पतञ्जलिना महाभाष्ये "अथ गौरित्यत्र कः शब्दः" इति शब्दविषयिण्या जिज्ञासायाः समाधानं "येनोच्चारितेन सास्नालङ्गूलककुदरवुरविषाणिनां सम्प्रत्ययो भवति स शब्दः" इति प्रतिपादयता स्फोटरूपेण कृतम्। स च स्फोटः वर्णव्यतिरिक्तो वैखर्यादिनादसहित वर्णाभिव्यङ्ग्यः अखण्डः, स्फटिकादिवत् पररूपग्राही, व्यापकः, मनोमात्रग्राह्यश्चाङ्गी क्रियते। ततश्च मन्दबुद्धि साधारण्येन "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः" इति च पतञ्जलिनैव वदता स्फोटाख्यस्य शब्दस्य ध्वनिरिति व्यवहारः क्रियते लोके इत्यपि सूचितम्। अमुमेवार्थं विशदयन् 'स्फोटो नादव्यङ्ग्यः' इति कैयटः प्रोक्तवान्। "बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति मम्मटेनापि काव्यप्रकाशे स्पष्टीकृतम्। तपरस्तत्कालस्येति सूत्रे-

"ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।  
अल्पो महाँश्च केषांचिद् उभयं तत्स्वभावतः॥

इति ग्रन्थेन पतञ्जलिना ध्वनेर्व्यञ्जकत्वं स्फोटस्य व्यङ्ग्यत्वं च प्रतिपादितम्। शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते, व्यङ्ग्यस्त्वाभिन्नकाल एवेति कैयटेन वदता स्फोटात्मकस्य शब्दस्य माहात्म्यं प्रकटी कृतम्। शब्दतत्त्वमादायैव दृश्यप्रपञ्चस्योत्पत्तिक्रमो नागेशेन लघुमञ्जूषायामेवं प्रदर्शितः। प्रलये सर्वं जगत् मायायां लीयते। सा च माया चेतने ईश्वरे लीयते। लयश्च मायाया नात्यन्तिको नाशः उत्तरसर्गानुत्पत्तेः। ततः कालवशात् मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपम् अव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोः अचिदंशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिंदशो बिन्दुरिति। अस्माद् बिन्दोः शब्द ब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानमात्रं सृष्ट्युपयोग्यव्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव 'रव' - 'परा'- दिशब्दैर्व्यवह्रियते-

"बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
तदेव श्रुतिसम्पन्नैः शब्द ब्रह्मेति गीयते॥"

इत्युक्तेः। तत्र मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वाग् उच्यते। मनोगोचरीभूता पश्यन्ती वाग् उच्यते। एतद् द्वयं समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुना अभिव्यक्ता तत्तदर्थवाचकस्फोटरूपरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्य मध्यमा वागुच्यते। ततः आस्यपर्यनामागच्छता वायुना ऊर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेषु अभिव्यक्तां परश्रोत्रेणापि ग्राह्या बैरवरी वाग् उच्यते। युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र मध्यमानादोऽर्थवाचकस्फोटात्मक- शब्दव्यञ्जकः। वैरवरीनादो ध्वनिः सकल-श्रोत्रमात्रग्राह्यो भेर्यादिवादवन्निरर्थकः। मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च।" तथैव च भर्तृहरिरप्याह-

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥"

अत्रत्य अनादिनिधनपदस्य नागेशानुसारेण शब्दब्रह्मणः नित्यत्वकथनं यावत् सृष्टिस्थित्या व्यवहारनित्यतया वा समुन्नेयम्।

स चायं पन्थाः न वाक्यपदीयकारनुगतः किन्तु तन्त्रशास्त्रानुगतः। भर्तृहरिस्तु व्याकरणागममनुसृत्य नित्यं शब्दब्रह्म शब्दभावेन वितृत्तं सद् अर्थभावेन विवर्तते इति अनादिनिधनमिति कारिकया वदन् तस्यैव शब्दब्रह्मणा सर्वजगदुपादानत्वं मन्यते। नागेशस्तु तन्त्रशास्त्रमनुसृत्य शब्दब्रह्मणोऽनित्यत्वमास्थाय अर्थसृष्टौ तज्जन्मानुपलब्धात् नित्यत्वं वदन् वाक्यपदीयकारोक्तिमन्यथयति। तदिदमन्यथाकरणम्-

"इत्याहुस्ते परं ब्रह्म यदनादि तथाऽक्षयम्।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्।"

# ''जन्मभूमिः परा प्रिया''

संस्कृतवाङ्मये मातृभूमिं प्रति महती श्रद्धा प्रदर्शिता। महर्षीणां दृष्ट्या मातृभूमिरेव सर्वस्वम्। मातृभूमिरेव स्वर्गः मातृभूमिः अन्तरिक्षं मातृभूमिः माता-पिता पुत्रः देवता वा। समाजस्य पञ्चवर्गेषु अस्याः एव रूपं दृश्यते यथा कथितम् अथर्ववेदे-

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वेदेवा अदितिः पंचजना अदितिर्जातमदितिर्जनित्वम्॥

एवम् अतीतं भविष्यं वापि अदितिः पृथ्वी एव। वेदेषु मातृविषयकाः बहवः प्रसङ्गाः प्राप्यन्ते यथा ऋग्वेदे 'माता पृथिवी महीयम्' इति। अथर्ववेदे तस्याः वन्दनं कृतम्। भूमिरेव माता, अहं तस्याः पुत्रः - 'माता भूमिः पुत्रोऽहं पृथिव्याः' इति। पुत्रं प्रति मातुः सहजं प्रेम वर्तते। तस्य कृते सा सर्वमपि त्यक्तुं समर्था। सा सदैव पुत्रस्य सुखं प्रति चिन्तिता भवति। एवं यथा माता स्व पुत्रं सर्वस्वं मन्यते तथैव पुत्रोऽपि तां प्रति मनसा वाचा कर्मणा श्रद्धावान् भवति।

यस्यां भूमौ देशे वा मनुष्यः जन्म लभते स एव देशः तस्य जन्मभूमिः मातृभूमिः वा भवति। कोऽपि नरः स्वमातृभूमिं कदापि न विस्मरति। यदि संसारे अस्ति कोऽपि मनुष्यः यो मातृभूमिं प्रति श्रद्धां न प्रदर्शयति स जीवन्नपि मृत एव। पृथ्वी एव सर्वेषां नराणां कल्याणकारिणी माता। सा पवित्रनियमानुसारिणी, विपुलशक्तिदायिनी, नित्यनूतना, विशाला, सुखदा, योगक्षेमकारिणी भोजनदायिनी च, यथोक्तम् अथर्ववेदे-

महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हवामहे।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम्॥

यथा नराः सुदृढां सुरक्षितां नौकाम् आश्रित्य दुर्गमाः सरितः पारं गच्छन्ति तथैव सर्वसुखसम्पन्नां मातृभूमिम् आश्रित्य जीवननद्याः पारं सरलतया गच्छन्ति। तेषामयं विश्वासः यत् मातृभूमिः तेषां त्रिविधं कल्याणं करिष्यति यथोक्तम्-

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।
दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमारुहेमा स्वस्तये॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे।
यस्या उपस्थ उर्वन्तरिक्षं सा नः शर्मत्रिवरूथं नि यच्छात्॥

मातृभूमिः अस्मत्कृते सर्वस्वप्रदायिनी। वयं स्तुमः यत् सा गाः अन्नं च ददातु- "सा नो भूमिर्गोष्वप्यन्ने दधातु।" सा ऐश्वर्यं ददातु अस्मान् तेजोयुक्तान् च करोतु- "भगं वर्चः पृथिवी नो दधातु"। सा कामधेनुरिव मधुराणि वस्तूनि ददातु- "सा नो मधुप्रियं दुहाम्"। अपि च सा भूरिधाराभिः दुग्धपानं कारयतु- "सा नो भूमिर्भूरिधारा पयो दुहाम्"। सा अस्माकं राष्ट्रं कान्तिबलयुतं करोतु- "सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे"। सा मां स्व पुत्रं पयः पानं कारयतु - "सा नो भूमिर्विसृजतां माता पुत्राय मे पयः"। हे मातृभूमे! भवत्याः गिरयः हिमाच्छादिताः पर्वताः अरण्यञ्च अस्मत्कृते सुखमयाः सन्तु- "गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु।" सा मातृभूमिः उन्नतिशिखरे वर्तमाना अस्माकम् उन्नतिं विदधातु- "सा नो भूमिर्वर्धयद् वर्धमाना।" हे पृथिवि! अस्माकं वाणी माधुर्ययुक्ता भवेत्-

"वाचो मधु पृथिवी धेहि मह्यम्"। वयं मङ्गलमयीं सुखकारिणीं मातृभूमिम् अनुचरेम- "शिवां स्यानोमनुचरेम विश्वहा"। हे मातृभूमे! वयं हिरण्यमिव कान्तियुक्ताः भवेम - "सा नो भूमे प्ररोचय हिरण्यस्येव सद्दृशि"। वयं प्राणवन्तः आयुष्यवन्तः भवेम-

"सा नो भूमिः प्राणमायुर्दधातु"। पृथिवी अस्मान् दीर्घजीविनः करोतु- "जरदष्टिं मा पृथिवी कृणोतु"। वयं विश्वधात्रीं पृथिवीं सर्वदा स्तुमः - "पृथिवीं विश्वधायसं धृतामच्छा वदामसि"। मातृभूमौ स्थिता वयं दुःखं न प्राप्नुयाम- "मा व्यथिष्महि भूम्याम्"। हे मातः! वयम् अन्नघृतपुष्टिबलयुते भवत्याः अङ्के सुखपूर्वकं तिष्ठाम- "ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभिमिषीदेम भूमे"। हे जननि! कस्यामपि दिशि अस्मान् स्व अङ्काद् बहिः मा कुरु। वयं सदैव भवत्याः अङ्के तिष्ठेम- "मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत"। भूमिः अस्माकम्

इच्छानुसारं धनं ददातु- “सा नो भूमिरादिशतु यद्धनं कामयामहे”। सा अस्माकं शत्रूणां विनाशं करोतु- “सा नो भूमिः प्रणुदतां सपत्नान्”। ये केचन राक्षसाः पिशाचाः वा ते दूरम् अपसरन्तु - “पिशाचान्सर्वा रक्षांसि तानस्मद् भूमे यावय”। वयं कथमपि भवतीं न पीडयेम- सर्वदैव भवत्याः यशोगानं कुर्याम “चारु वदेम ते”।

मातृभूमिं प्रति या भक्तिभावना सैव तस्याः उन्नत्याः कारणम् यतो हि देशभक्तिभावनापूर्णः एव नरः तस्य रक्षणाय सर्वथा सन्नद्धः भवति।

# अज्ञता कस्य नामेह नोपहासाय जायते

विद्वान् भवेत् अल्पज्ञो वा कस्यापि जनस्य अज्ञता उपहासाय एव भवति इति नात्र संशयः। बालोऽपि प्रायः बृद्‌धस्य अज्ञस्य अज्ञताम् अधिकृत्य हसतीति प्रत्यक्षमेव।

न केवलं मनुष्या एव अज्ञातया उपहासपात्रत्वम् उपयान्ति अपितु देवा अपि अज्ञतया अज्ञतां सूचकेन स्खलितेन वा उपहास्यतां समायान्ति। बाणभट्ट कृतायां हर्षचरिताख्यायाम् आख्यायिकायाम् एका घटना ग्रन्थारम्भे एव वर्णितास्ति। तद्‌यथा- एकदा खलु ब्रह्मा कमलासने विराजमानः इन्द्रादिदेवैः परिवृत्तः विविधाः कथाः कुर्वन् आसाञ्चक्रे। तत्र मनुदक्षप्रभृतीनां प्रजापतीनां सप्तर्षीणाम् अन्येषाञ्च महर्षीणां समवायः आसीत्। तत्र केचित् ऋचः समुदाचारयन्, केचित् यजूंषि अपठन्, केचिच्च सामानि जगुः। क्रमशस्तत्र विद्याविवादोऽपि प्रादुरभवत्। अथ क्रोधावतारत्वे प्रसिद्‌धः दुर्वासा मुनिः मन्दपालसंज्ञकेन मुनिना सह कलहायमानः क्रोधान्धः सन् साम गायन् विस्वरम् अकरोत्। स्वरस्खलितं श्रुत्वा सरस्वती मुनिं दुर्वाससं जहास।

अधीतशास्त्राः अपि जनाः यदि शास्त्राणां वास्तविकं तत्त्वं न जानन्ति अवश्यमेव ते स्वकीयाम् अज्ञतां प्रकटयन्ति उपहास्यतां च यान्ति। यथा- एकस्मिन् स्थाने चत्वारो जनाः परस्परं मैत्रीभावसमापन्नाः प्रतिवसन्ति स्म। ते एवम् अचिन्तयन्, 'देशान्तरं गत्वा विद्योपार्जनं कार्यमिति।' अथ ते सर्वे विद्योपर्जनाय कान्यकुब्जदेशं गतवन्तः। तत्र द्वादशाब्दानि यावद् विद्यामधीत्य स्वान् विद्याकुशलान् मन्यमानाः शास्त्ररटनपटवस्ते सर्वे गुरोरनुज्ञाम् उपलभ्य स्वदेशं प्रति प्रचलिताः रटितान् तान् स्वकीयान् ग्रन्थान् नीत्वा यावद् किञ्चित्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ दृष्टौ। दृष्ट्वा च सर्वे उपविष्टास्तत्र। तत्र एकेन कथितं केन मार्गेण गच्छामः। तस्मिन् समये तन्नगरवासिनः कस्यापि वाणिकस्य मृतं पुत्रं दाहार्थं जनाः नयन्ति स्म। ततः रटितशास्त्रेषु पण्डितेषु एकेन स्वकीयं पुस्तकम् उद्‌घाटितं पठितञ्च- 'महाजनो येन गतः स पन्थाः' इति। अतः महाजनमार्गगमनस्यैवौचित्यम्। अथ ते चत्वारः यावन्महाजनसंदर्भेण सह यान्ति तावद् कश्चिद रासभः श्मशाने दृष्टः।

तदा द्वितीयेन स्वपुस्तकम् उद्घाटितम् अवलोकितं पठितञ्च-

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रु सङ्कटे।
राजद्वारे शम्शाने च यः तिष्ठति स बान्धवः ॥

इति अतः कीदृशम् अस्मत् सौभाग्यं, अयम् अस्माकं बान्धवः। अतएव शास्त्रार्थज्ञताजन्याम् उपहासयोग्यां स्वकीयां मूर्खतां प्रकटयन् कोऽपि तस्य ग्रीवायां लगति कोऽपि पादौ प्रक्षालयति इत्यादि।

तस्मिन्नेव काले तैरेकः उष्ट्रो दृष्टः। तैः कथितम् - एतत् किम्? तदा एकः पुस्तिकायां पठितवान् - 'धर्मस्य त्वरिता गतिः' तन्नूनमेष धर्मःतदा अपरेण शास्त्ररटनपटुना उक्तं- इष्टं धर्मेण योजयेत्। अतः तैः स रासभः उष्ट्रस्य ग्रीवायां बद्धः। एवं बद्धे रासभे कोऽपि प्रत्यक्षदर्शी एतद्वृत्तान्तं रासभस्वामिनं रजकं विज्ञापितवान्। रजकस्तु उष्ट्रस्य ग्रीवायां बद्धं स्वरासभं श्रुत्वा लगुडं गृहीत्वा तान् उष्ट्रग्रीवायां रासभं योजकान् ताडयितुं प्रचलितस्तावत्ते सर्वेऽपि पुस्तकधारिणः स्वीयान् ग्रन्थान् नीत्वा प्रपलायिताः। एवं सर्वजनानाम् उपहासपात्रत्वं गताः । इत्येवंविधाः कथाः कथाग्रन्थेषु उपनिबद्धाः वर्तन्ते।

एकदा एकस्मिन् सभायां मुख्यातिथेः स्वागतार्थं तस्मै आभारप्रदर्शनार्थम् एकः लक्ष्मीधरः सभायां वर्तमानं तं मुख्यातिथिं 'स्वर्गीय' शब्देन सम्बोधितवान्। तत्र सभायां वर्तमानाः श्रोतारः सविस्मयं वक्तुः श्रेष्ठिनः अज्ञतां विज्ञाय उपहासं कृतवन्तः। पृष्टः सन् जनैः यदयं मुख्यातिथिस्तु अस्माकं मध्ये एव वर्तते श्रीमता भवताऽपि प्रत्यक्षी क्रियते कस्मादयं 'स्वर्गीयः' तेन उत्तरितं यन्मया बहूनां महापुरुषाणां विषये तद्विशेषणत्वेन 'स्वर्गीयः' शब्दः श्रुतः अवधारितश्च अयं 'स्वर्गीयः' शब्दः कोऽप्यसाधारणविशेषणः सम्मानार्थकः, अतः प्रयुक्तः मया 'स्वर्गीय' शब्दः। यथा स्वोर्गोऽपि पुण्येनैव लभ्यते दुष्प्राप्यश्च तथैव 'स्वर्गीय' शब्द एव महापुरुषाणामेव विशेषणत्वं भजते। तदा जनाः स्मेरमुखाः तं विज्ञापितवन्तः यत् 'स्वर्गीय' शब्दः 'मृत' शब्दस्य पर्यायः। स लक्ष्मीधरः श्रेष्ठी अतीवलज्जां अनुभूतवान्।

एकमपरम् उदाहरणम् श्रूयन्ताम्। एकः खल्वासीत्, वैयाकरणः। सः स्वं

वैयाकरणाशिरोमणिं मन्यमानः शब्दशास्त्रे स्वप्रतिद्वन्द्विनं नागणयत्। अतीवाहम्मन्यः स एकदा दैवदुर्विपाकात् काशरोगपीडितः सन् एकं भिषगाचार्यं प्राप्तः। स तं वैद्यम् अपृच्छत् 'भो वैद्यराज! काशरोगपीडितोऽहम्।' वैद्येन उत्तरितम्-मदीये औषधालये तु ओषधयः सन्ति, किन्तु अत्र मत्समीपे औषधयः न विद्यन्ते, मम औषधालयात् नयतु भवान्' इति। वैयाकरणोनोक्तं 'भो वैद्यराज! न तत्र गन्तुं शक्तोऽहम्'। ब्रूहि मम ओषधीनां नामानि यदि न विस्मरणं गतानि भवतः। वैद्येन तु काशरोगशमकाः श्लोकाः पठिताः, वैयाकरणेन तु लिखिताः। ससन्तोषं कथितवान् शब्दार्थज्ञानपटुः वैयाकरणः यदहं ओषधिं निर्माय तस्य सेवनं करिष्यामि। वैद्येनोक्तं 'भवान् मत्तः श्लोकान् तु लिखितवान्, किन्तु भवता श्लोकार्थः न ज्ञातः, अतः मत्तः श्लोकार्थोऽपि विज्ञेयः, इति श्रुत्वा स वैयाकरणः रोषेण स्फुरिताधरः तारस्वरेण अभाषत्- 'अहं वैयाकरणः, शब्दशास्त्रपारगः, कथं न जानामि आयुर्वेदशास्त्रगतानाम् अतीवसरलानां श्लोकानाम् अर्थम्, माम् उपहससि, तिरस्करोसि। वैद्येनोक्तं - 'नाहं तिरस्करोमि भवन्तम्, अहं तु जनसेवकः, चिन्तितं मया यत् आयुर्वेदशास्त्रगतशब्दाः बहवः पारिभाषिकाः सन्ति अतः विवक्षोः मम तादृशी प्रवृत्तिः। यदि भवान् स्वयं श्लोकार्थं ज्ञातुं प्रभवसि, तन्न काचिदस्मोकं हानिः।'

वैयाकरणः यदा ओषधेः सेवनं कृत्वा न कञ्चिल्लाभं प्राप्तः तदा वैद्यं गत्वा निवेदयामास यन्नास्ति कश्चिल्लाभः। वैद्यराजः श्लोकगतानां पारिभाषिक शब्दानाम् अर्थं पृष्टवान्। तत्र 'कण्टकारिः' इति शब्दस्य कोऽर्थः इति पृष्ठः सन् स वैयाकरणः उवाच- 'कण्टकस्य अरिः कण्टकारिः, षष्ठीतत्पुरुषसमासः, अस्यार्थः उपानह्। अहं ओषधिनिचये उपानहतुः खण्डानि निक्षिप्य ओषधिं निर्माय तदोषधिं क्वाथरूपां पुनः पुनः पीत्वा न काशरोगान्मुक्तः। तदा वैद्येन विहस्य कथितं - 'भोः शब्द-शास्त्रपारग नात्र 'कण्टकारि' शब्दस्य 'उपानह्' इत्यर्थः। कण्टकारिः ओषधिविशेषस्य नाम, सा ओषधिः लतारुपा कण्टकमन्विता यत्र तत्र भूमौ उत्पन्ना प्रसारिता च दृश्यते। वैयाकरणस्तु लज्जावनतमुखो न किञ्चिदपि कथिवान् स्वगृहं च प्रतिनिवृत्तः। अतः यदुक्तं - 'अज्ञता कस्य नामेह नोपहासाय जायते' तत्तु सर्वथा सत्यम्।

# नहीङ्गितज्ञोऽवसरेऽवसीदति

सूक्तिरियं कविकुलकमलरवेर्भारवेः कीर्तिकलेवरे किरातर्जुनीयमहाकाव्ये चतुर्थसर्गस्थशरद्वर्णनप्रसंगे महाकवेर्मुखपद्माद् विनिःसृतास्ति। यस्य पद्यस्य तुरीयांशभूता सूक्तिरियं तत्सकलं पद्यमत्रोद्ध्रियते- ततः स संप्रेक्ष्य शरद्गुणश्रियं शरद्गुणालोकनलोलचक्षुषम्। उवाच यक्षस्तमचोदितोऽपिगां नहींगितज्ञोऽवसरे-ऽसीदति। इति अत्रेंगितशब्दार्थस्तु इंगितं हृदगतो भावो वहिराकार आकृतिः। इति विश्वकोशप्रामाण्यात् हृदयस्थोभावो अभिप्रायोवाऽस्ति। तत्सूचका हस्तादिचेष्टा अपि तदर्थे प्रयुज्यमानाभवन्ति। कवि कुल कुमुद क्लाधरः कालिदासः रघुवंशमहाकाव्ये सम्राजं दिलीपं गूढाकारेंगितज्ञमवादीत्।

तस्य संवृतमंत्रस्य गूढाकारेंगितस्य च।<br>फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव॥

वाचानभिहितस्य मनोगतभावरूपेंगितस्य ज्ञानं प्रगतिभावतां सहृदयानामेव जायते। इंगितज्ञानाय प्रातिभं चक्षुरपेक्ष्यते वाचा प्रकाशितस्य भावस्य ज्ञानं तु सर्वेषामेव संजायते। स इंगितज्ञः सूक्ष्मबुद्धिवैभवसम्पन्नोजनः अवसरे काले प्राप्ते कदापि न तूष्णीं तिष्ठति। वक्तुं योग्यं वदति कर्तुमुचितं करोति। गन्तव्यस्थानं गच्छति च। परेंगितमनुसृत्य सर्वत्रैव कार्येषु प्रवृत्तिं निवृत्तिं वा विधत्ते। इत्थं घटे समुद्रसमावेश इव स्वल्पपरिमाणैरेव शब्दैः महतो महत्तराणामर्थानां प्रकटनं कुर्वता महाकविना भारवेरर्थगौरवम्, अस्या उक्तेः पूर्णतया पुष्टिः सम्पाद्यते।

अत्रेदं वक्तव्यं भवति नहि सर्वे इंगितज्ञा भवन्ति। वाचा प्रकाशितमर्थं पशवोऽपि विदुः गजाश्वादयोऽपि हस्तिपकादेरुक्तमादेशमवगम्य रथादिकं वहन्ति। पण्डितबुद्धयो नरा एव अनुक्तमपि बुद्ध्यावगाहन्ते। एतेनैव बुद्धेः सार्थकत्वं संजायते। प्रतिभाजनितेंगितज्ञानस्योत्कर्षं प्रतिपादयन्कविः प्राह-

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति देशिताः।<br>अनुक्तमप्यूहति पण्डितो जनः परेंगितज्ञानफला हि बुद्धयः॥

युद्धे विजयप्राप्तये तपश्चरणार्थं गमिष्यतेऽर्जुनाय विद्यामुपदिश्य निर्गते महामुनौ कृष्णद्वैपायने तदाज्ञप्तो गुह्यकोऽर्जुनमिन्द्रकीलपर्वतं प्रापयन् समागतशरच्छोभा सौन्दर्यलुब्धचेतसंतंधनञ्जयं दृष्ट्वा इंगितज्ञो यक्षः शरच्छोभांवर्णयितुमुपचक्रमे। इत्थमनेकान्युदाहरणान्यस्याः सूक्तेश्चारितार्थ्यकारीणि सन्ति। यथा हि राजसूयेन यक्ष्यमाणो धर्मराजो युधिष्ठिरः भीमसेनादीन् स्वभ्रातृन् विजये न्ययुंक्त। लोकपालांशसम्भवाः सर्वे वीरास्तद्भ्रातरो नृपान् विजित्य भूरि द्रविणमाजह्रुः। किन्तु जरासन्धमजितं श्रुत्वा तदुपायज्ञः श्रीकृष्णः उपायमचिन्तयत् तदनुसारेण भीमसेनोऽर्जुनः कृष्णश्चेतित्रयो ब्रह्मवेषधारिणो जरासन्धान्तिकं गत्वा वाञ्छितं प्रदातुं ययाचिरे।

वदान्येन तेन दातुं प्रतिश्रुते ते तं युद्धमयाचिषुः। एतदाकर्ण्य स स्वतुल्य बलेन भीमेन सह योद्धुमंगीकृत्य तस्मै एकां महतीं गदां प्रदाय द्वितीयां स्वयमादाय रणस्थलमाजगाम। युद्धे समारब्धे प्रहारेण तयोरुभयोर्गदे चूर्णीबभूवतुः। ततो मुष्टिभिः प्रहरतोः युध्यमानयोस्तयोः सप्तविंशतिदिनानि व्यतीयुः। तदा वृकोदरो जरासन्धजयान्निराशोभूत्वा श्रीकृष्णमब्रवीत्- युद्धात् निवर्तमानं विलोक्य तं भीमं प्रोत्साह्य युद्धे पुनः प्रावर्तयत्।

युदध्यमानाय तस्मै हस्तेन तृणं द्विधा पाटयन् संज्ञामददात्। सद्य एव तदिंगितज्ञो भीमसेनः पादयोर्गृहीत्वा शत्रुंभूतले न्यपातयत्। स्वस्यैकेन पादेन शत्रोर्जरासन्धस्यैकं पादमाक्रम्य द्वितीयं हस्ताभ्यां गृहीत्वा गुदस्थानात् द्विधापाटयामास तेन जरासन्धो हतोऽभूत्। तत्कलेवरं च द्विधाभिन्नमभूत्। इंगितज्ञो भीमो यदि तदवसरेऽवसीदेत्तर्हि शत्रोर्जयो दुर्लभ एव स्यात्। कृष्णद्वैपायनोव्यासो वृत्तमिदमित्थं वर्णयामास-

संचिन्त्यारिवधोपायं भीमस्यामोघदर्शनः।
दर्शयामास विटपं पाटयन्निव संज्ञया।
तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः।
गृहीत्वा पादयोः शत्रुं पातयामास भूतले।
एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः।

गुदतः पाटयामास शाखामिव महागजः।
एकपादोरुवषण - कटिपृष्ठस्तनांशके।
एकवाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः॥

अन्यच्चोदाहरणमिदं पश्यन्तु- महाभारतसंग्रामे समाप्ते भीमदुर्योधनयोर्गदायुद्धे प्रवर्तमाने भीमो दुर्योधनं जेतुं नाशक्नोत् तदा श्रीकृष्ण स्वां जंघां करेण ताडयित्वा वृकोदरमिदमबोधयत् यद् दुर्योधनस्य जंघयोः प्रहारं कुरु इति। तदिंगितज्ञो भीमसेनः पूर्वकृतां दुर्योधनजंघाचूर्णनरूपां स्वप्रतिज्ञां यथा- 'चञ्चद्भुजभ्रमित-चण्डगदाभिघातसंचूर्णितोरुयुगुलस्य सुयोधनस्य। स्त्यानावनद्ध घनशोणितशोण-पाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः।' संस्मार युद्धनियमानुल्लंघ्य गदाप्रहारेण दुर्योधनस्य जंघे चूर्णयामास च यदि तदवसरेऽवसादः आश्रितः स्यात्तदा महती विपत्तिः: स्यात् शत्रोर्जयो दुष्कर एव स्यात्। आस्तां तावत् ऐतिहासिकी पौराणिकी च दृष्टान्तचर्चा। ये हि लोके विटादयस्तेऽपिं परमचतुरा इंगितज्ञा भवन्तीति काव्यादिषु सर्वत्रैव प्रसिद्धम्। प्रस्तूयते निदर्शनमेकम्-समागमसंकेतकालं जिज्ञासमानः कश्चिद्विटः काञ्चिन्नायिकामुपागतः। तस्येंगितज्ञा सा करस्थित-लीलाकमलनिमेलनेन सन्ध्यासमयः संकेतकाल इत्यसूचयत् - तथा चोक्तं कविना-

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥'

संन्ध्यासमये कमलानां संकोचज्ञानाद् वचनमन्तरेण तया विदग्धनायिकया तत्सूचितम्।

अपरं विश्रुतमुदाहरणं पश्यन्तु कौसल्याहृदयनन्दनो रामः सीता सौमित्रिभ्यां वनाय अयोध्यातः प्रस्थितो मार्गे भगवतीं भागीरथीमासाद्य तांतीर्षुः कैवर्तं निषादाधिपतिमाजुहाव। स तान्सम्यक् पाद्यादिर्भिरुपचारैः समर्च्य स्वनाव्यारोप्य पारेगंगमासाद्य नौकातोऽवतीर्य सादरं प्रणनाम। पारितोषिक प्रदानार्हाय तस्मै निषादाय किमपि दातुं योग्यं वस्तुजातमनवलोक्य रामचन्द्रः संकुचितचेता बभूव।

तं तथाभूतमवलोक्य इंगितज्ञा वैदेही सद्य एव कराम्बुजान्मणिमयीमंगुलिमुद्रा

मुन्मुच्य कैवर्ताय ददौ। इयं घटना हिन्दीसाहित्याकाशभास्करेण गोस्वामिना तुलसीदासेन स्वान्तः सुखाय विरचिते श्रीरामचरितमानसकाव्ये रुचिररीत्या वर्णिता। यथा- 'केवट उतरि दण्डवत कीन्हा। प्रभु सकुचे कछु याहि न दीन्हा॥ प्रिय हिय की सियजाननिहारी। मनि मुंदरी मन मुदित उतारी॥' इत्यादि

इत्थं प्रतिभारूपेण चक्षुषा परोक्षमपि पश्यन्तोऽनुक्तमपि श्रृण्वन्तो जानन्तो विदग्धाः इंगितज्ञानशालिनः समुचितं कालं कदापि न परित्यजन्ति। अतः एवेदं साधूच्यते- नहींगितज्ञोऽवसरेऽवसीदति।'

# महाभारतस्य रचनाकालः

महाभारतस्य समयमधिकृत्य बहुभिर्भारतीयैर्विदेशीयैश्च विद्वद्भिर्बहु लिखितं वर्तते। तत्र तेषां यो मतभेदो दृश्यते स स्वाभाविक इति विशेषतो वचनं नार्हति। संस्कृतवाङ्मयेविपुलतमःआसन्नलक्षसंख्याकश्लोकघटितत्वात् 'शतसाहस्री-संहिता' इत्यपि नाम्ना विख्यातोऽयं ग्रन्थः। वाल्मीकिरामायणवद् इतिहासत्वेन गण्यते इयं कृतिः। तत्र सन्ति पर्वाण्यष्टादश। भूयसानुष्टुप्च्छन्दसा निबद्धेऽस्मिन् ग्रन्थेऽन्यच्छन्दोबद्धा अपि बहवः श्लोकाः सन्ति। स्वल्पो गद्यभागोऽप्युपलभ्यते यो भाषया शैल्या चारण्यकोपनिषदादिवैदिकवाङ्मयं स्मारयति। यद्यपि कौरवपाण्डवचरितरुपैव तत्र प्रधानकथा तथापि अनेकानि प्रासङ्गिकान्युपरख्यानानि, धर्माधर्मनिरूपणपराणि बहूनि व्याख्यानानि, असंख्यानि नीतिवाक्यानि, विष्णुसहस्रनामादिधार्मिकजीविताङ्गभूता अंशाः, श्रीमद्भगवतगीतादिवेदान्ततत्त्वावेदकभागाश्च तत्र समुपलभ्यन्ते। इदं तस्य विश्वकोषस्वरूपमभिलक्ष्यैवेत्थं प्रोद्धोषितं वर्तते- धर्मे चार्थे च कामे च मोक्षे च भरतर्षम। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ इति। अत्रायं प्रश्नः समुल्लसति-किमेतादृशोऽतिविपुलकलेवरः वैदिकलौकि- कोभयभाषाविरचितः निरवधिविषयविवेचनपरो ग्रन्थः एकेनैव महाविदुषा अप्रतिमप्रतिभेन महाकविना कस्मिंश्चिन्नियते कालान्तरे विरचितः, आहोस्वित् कुरु पाण्डवकथामात्रप्रतिपादकः कश्चित् स्वल्पकलेवरो मूलग्रन्थः तदा तदा तैस्तैर्विद्वद्भिः स्वस्वरुच्यनुसारेण स्वस्वसम्प्रदायपुष्ट्यर्थं वा प्रासङ्गिकोपाख्यानानां धर्मोपदेशपराणां नीतिप्रतिपादकानामन्येषां च भागानां संयोजनेन एतादृशीं विपुलतामापादितः, अत एव चानेककर्तृकः इति।

तत्र प्रायेण द्वितीयः पक्ष एवाधुनिकैर्विद्वद्भिः समाद्रियते। कस्यचिन्मतानुसारेण कुरुपाण्डवयुद्धवर्णनमात्रपरस्य अष्टाशीतिशतश्लोक- परिमितस्य मूलगन्थस्य प्रथमं तावद् चतुर्विंशतिसहस्रश्लो- कात्मकत्वं सम्पाद्य भारतमिति नवीना संज्ञा कृता। तदनन्तरं गच्छत्सु बहुषु वर्षशतेषु तस्मिन्नेव भारते पुनरप्यन्यानेकनवनवभागानां सन्निवेशेन, सर्वेषामंशानामन्योन्यं सुष्ठु संघटनेन च

लक्षश्लोकात्मकं महाभारतसंज्ञकं नवीनं संस्करणं कृतम्। सूच्यते च सर्वमिदं महाभारत एव दृश्यमानाभिरेताभिरुक्तिभिः -

जयनामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।<br>
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।<br>
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा॥<br>
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्<br>
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः॥ इति॥

पूर्वसिद्धानां तत्र तत्र विप्रकीर्णानां संदर्भाणां संग्रहणम्, तेषां चैककथाङ्गत्वेन उचितक्रमपरिकल्पनेन च संग्रथनमिति योऽयं साहित्यव्यापारः स एव व्यास संज्ञकः इति तत्कर्ता अपि व्यास एव इति व्यासकृतत्वेन प्रसिद्धमिदं महाभारतसंज्ञकमन्तिमं संस्करणमिति तेषामभिप्रायः।

सहरिवंशं लक्षदेशीयश्लोकात्मक- महाभारत संज्ञकस्यान्तिमसंस्करणस्य युग कुत्र कुत्र कस्मिन् कस्मिन् समये सद्भावः सप्रमाणं साधयितुं शक्यते इत्यधुना विचारणीयम्। इन्दोनेष्यान्तर्गतयवबलिद्वीपयोः क्रिस्तुयुगस्य पञ्चमे शतके तत्रत्यकविसंज्ञकभाषया आदिविराटउद्योगभीष्मआश्रमवासिमुसल- प्रास्थानिक - स्वर्गारोहणादिपर्वघटितस्यमहाभारतस्यानुवादः संजातः। अतोऽनुमीयते यत् तदा महाभारतस्य तादृशी प्रतिष्ठा आसीत् यद् भारताद् बहिरपि तस्य प्रचारो भवति स्म। क्रिस्तुयुगस्य पंचचत्वारिंशदधिकचतुश्शततमे वर्षे लिखित- शिलालेखे एकस्मिन् महाभारतस्य शतसाहस्री संहिता इति संज्ञया परामर्शः कृतो दृश्यते। अयं च सहरिवंशस्य अधुनोपलभ्यमानस्यैव महाभारतस्य तदापि सद्भावं प्रमाणयति। प्रायः तस्मिन्नेव समये तिब्बतीयभाषायामपि तस्य परिवर्तनं संजातम्। महाकव्यश्वघोषकृते वज्रसूचिकोपनिषन्नाम्नि ग्रन्थे हरिवंशान् महाभारताच्च केचिच्छ्लोका उद्धृता दृश्यन्ते। क्रिस्तुयुगस्य प्रथमा शताब्दी एवाश्वघोषस्य समयः। अतः साम्प्रतिकं महाभारतं तदाप्यासीदिति स्पष्टं ज्ञायते। महाकविकालिदासस्मृतेन भासमहाकविना महाभारतादितिवृत्तं गृहीत्वा कानिचिन्नाटकानि विरचितानि। अतो भासापेक्षया महाभारतस्य प्राचीनत्वं सिद्धं भवति। क्रिस्तुयुगोपक्रमात् प्रागेव

भारतवर्षमलंचकार महाकविर्भास इति बहूनां विदुषां मतम्। एवं सति महाभारतस्यापि क्रिस्तोः प्रागेव सद्भावः सिद्धो भवति। क्रिस्तुयुगाद् अवरतः पञ्चशतवर्षैः प्राचीनो महावैयाकरणः पाणिनिः स्वकीयाष्टाध्याय्यां महाभारतशब्दस्य पूर्वपदप्रकृतिस्वरत्वं शास्ति। अत एवेतिहासग्रन्थोऽयं तस्य परिचित आसीदिति अनुमीयते। श्रीमद्भगवद्गीता महाभारतस्यैवैकोंऽशः इति सुप्रसिद्धमेतत्। अतः गीताकालनिर्णयेन महाभारतस्यापि कालनिर्णयः संजायते गीताकालनिर्णये च विद्वद्भिः लोकमान्यबालगंगाधरतिलकमहाभागैः प्रशंसनीयः प्रयत्नः कृतः। तेषां काश्चिद् युक्तयः विचारार्हाः। तद्यथा बाणभट्टकालिदासभासाः महाकवयः श्रीमद्भगवद्गीतया सुष्ठु परिचिता आसन्। यतस्तद्गताः शब्दा अर्थाश्च तेषां कृतिषु प्रतिबिंबिता दृश्यन्ते। अतः महाकवित्रयापेक्षया गीतायाः प्राचीनत्वं स्वीकर्तव्यं भवति। कल्परूपवेदाङ्गान्तर्गतगृह्यसूत्राणि क्रिस्तुयुगाद् बहुभिर्वर्षशतैः प्राचीने काले प्रादुरभवन्निति सर्वसम्मतमिदम्। तेषु गीतायाः वचनानि समुद्धृतानि दृश्यन्ते। यथा बौधायनगृह्यसूत्रे - 'देशाभावे द्रव्याभावे साधारणे कुर्यात्, मनसा वार्चयेत् तदाह भगवान्-

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।' गीतायाः नवमाध्यायस्योनत्रिंशः श्लोकः यथा वा बौधायनकृतपितृमेधसूत्रस्थ तृतीयप्रश्नारम्भे पठ्यते इदं वाक्यम्-

''जातस्य वै मनुष्यस्य ध्रुवं मरणमिति विजानीयात्। तस्माज्जाते न प्रहृष्येत् मृते च न विषीदेत'' इति। वाक्यमिदं श्रुत्वा-

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे, न त्वं शोचितुमर्हसि।

इति श्रीमद्भगवद्गीतागतं द्वितीयाध्यायस्य सप्तविंशं श्लोकं को न स्मरेत्। अतः बौधायनगृह्यसूत्रविर्भावात् प्रागेव, अर्थात् क्रिस्तुयुगोपक्रमाद् वर्षशतचतुष्टयेन प्राचीने काले गीतायाः सद्भावः सिद्ध्यति।

क्रिस्तोः प्राक् षष्ठे शतके भगवतो बुद्धस्याविर्भावोऽभूत्। अतः प्रश्नोऽयमुदेति- किं भगवतो बुद्धस्याविर्भावात् प्रागेव भगवद्गीतागर्भितस्य महाभारतस्याविर्भावः

संजातो न वेति। तत्र बहु विचार्य लोकमान्यतिलकमहाभागैर्यानि चत्वारि तथ्यानि निष्कृष्टानि तानि श्रवणार्हाणि मननार्हाणि च। तद्यथा (१) अनात्मवादि-संन्यास-प्रधानमूलबौद्धधर्मात् केवलात् भक्तिप्रधानस्य प्रवृत्तिप्रधानस्य च महायानसंप्रदायस्योद्भावः। (२) तदुत्पत्तिविषये बौद्धाचार्यैः स्वयं श्रीकृष्णस्य नामग्रहणं कृतम्। (३) भक्तिप्रधानस्य प्रवृत्तिप्रधानस्य च गीताधर्मस्य महायान-संप्रदायस्य च शब्दतः अर्थतश्च साम्यमुपलभ्यते। (४) अतः गीतायाः महाभारतस्य च भगवतो बुद्धस्याविर्भावादनन्तरं महायानसंप्रदायस्योद्गमात् च प्राग् उद्भवकालः स्वीकरणीयः इति।

एवं युक्तिभ्योऽयं निष्कर्षः निस्सरति यत् प्रथमोद्गमे स्वल्पकलेवरस्य 'जय' संज्ञकस्य च तदनन्तरं किंचित् परिवर्द्धितो भूत्वा भारत संज्ञां प्राप्तस्य, अन्ततः व्यासमुनिसंस्करणेन शतसाहस्रीत्वमापन्नस्यास्य महाभारतस्य क्रिस्तुयुगोपक्रमात् पूर्वं पञ्चमे शतके स्वान्तिमपरिनिष्ठितरूपेण सद्भावो नापह्नोतुं शक्यः। ततः प्रागेव तस्याविर्भावो बभूवेत्यपि न वाढमसंभवि।

# विद्या परं दैवतम्

''विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकारी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः॥

तत्रभवद्भर्तृहरिविरचितमिदं सुभाषितम्। तेनैव महाकविना विद्यायाः विदुषां च प्रशंसां कुर्वता अन्यदपि बहूक्तम्। तद्यथा - ''कल्पान्तेष्वपि न प्रयाति निधनं विद्यारव्यमन्तर्धनम्'' इति, ''वाण्येका समलं करोति पुरुषं या संस्कृता धार्यते'' इति, ''वाग्भूषणं भूषणम्' इति, ''सद्विद्या यदि कि धनैः'' इति। ''हर्तुर्नगोचरं याति, दत्ता भवति विस्तृता। तादृशेनैवान्येन केनचिन्मर्मज्ञेन कीर्तितम्-

''न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्॥

संस्कृतवाङ्मये बहुषु स्थलेषु विद्यायाः प्रशंसा कृता दृश्यते इत्यत्रायमेव हेतुर्यद् भारतीयसंस्कृतेर्विद्यैवाधारभूतं तत्त्वमिति। अत एव प्रतिदिनं संध्योपासनावसरे त्रिर्गायत्रीमन्त्रो जप्यते। यस्य धीनाम्ना मनुष्यधर्मस्य प्रेरणार्थं सिद्ध्यर्थं च प्रार्थनेयं प्रतिदिनं क्रियतेऽस्माभिः। विद्यास्वरूपः सः अथवा चरित्रसंवलितविद्यास्वरूपः। यतो विद्यावानुच्यते धीमानिति, चरित्रवांश्च धीरः इति। चरित्रसंवलितविद्यायाः, अथवा धियो विकासार्थं खलु विशिष्टैका सामाजिक- व्यवस्था देशेऽस्मिन् पुरा संस्थापिता अभूत्। मूलतत्त्वभूताया विद्याया विकासार्थं तस्याः गुरुशिष्यपरम्परा नवनवेषु वंशाक्रमागतेषु शिष्येषु विधिवत् संक्रामणेन रक्षणार्थं च ब्रह्मचर्याभिधानस्य संघटनमभूत्। भगवन्तं वेदं समवलम्ब्यैव सर्वासामपि विद्यानां विकासो बभूवेति समुद्घोष्यते बहुभिश्चिरन्तनैराचार्यैः। यथाह महाकविर्महाविद्वान् भर्तृहरिः।

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकाशिताः॥

इति। एवं सर्वविद्यानिदानभूतस्य वेदस्य रक्षणार्थं प्रवर्तिताया ब्रह्मचर्यसंस्थाया द्वौ स्तंभौ, ''आचार्यः अन्तेवासी च'' इति। तौ संभूय यथावद् गुरुकुलं- व्यवहारेण भवति विद्याविकासः। गुरुशिष्ययोः वास्तविकं स्वरूपम्, तयोः समुचितः परस्पर व्यवहारः, इत्युभयमपि श्रुतौ सम्यङ् निर्दिष्टं दृश्यते। अन्यत्रापि तद्यथा - 'आचार्यः कस्मात् ? आचारं ग्राहयति, आचिनोत्यर्थान, आचिनोति बुद्धिमिति वा'' इत्याह यास्काचार्यः स्वकीये निरुक्ते।

छान्दोग्योपनिषदि च आचार्योपदेशादेव सद्विद्या मोक्षश्च भवत इत्यभिप्रायेणैवमुक्तम् - ''एवमिहाचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति। अत एव तैत्तिरीयोपनिषद्गतेऽनुशासने पित्रोर्देवत्वभावनोपदेशानन्तरं ''आचार्यदेवो भव इत्याचार्यस्यापि देवत्वभावनोपदिश्यते। अस्या उपनिषदः आरम्भ एव अन्तेवासिनां विद्यायाः श्रवणधारणोपयोगानाम् प्रतिबन्धेन प्रवर्तनार्थं मित्रवरुणादिदेवातानां शंकरत्वं प्रार्थ्यते। तदनन्तरं वाय्वात्मकं ब्रह्म स्वस्यान्तेवासिनः ब्रह्मविद्यायाः प्रवक्तुराचार्यस्य च रक्षां करोतु इति या प्रार्थना सा श्रवणार्हा इति पठ्यते -

''नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मवदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि तन्मामवतु। तद् वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ओं शान्तिः। शिष्य इवोचार्योऽप्युभयो-र्युगपद्धितमिच्छन्-

कथयति- ''सह नौ यशः। सह नौ ब्रह्मवर्चसम् इति। आचार्यान्तेवासिनोः परस्परस्नेहसौहार्दाभ्यामेव विद्यावृद्धिर्भवितुमर्हतीत्यभिप्रायेणैव उपनिषदध्ययन-प्रारम्भे शान्तिपाठोऽयं सर्वत्र भारतेऽद्यापि पठ्यते।

''सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु। मा विद्विषावहै।
ओं शान्तिः शान्तिः शान्तिः ॥ इति ॥

ब्रह्मचर्याश्रमस्य विद्याविकासैकप्रयोजनस्य समस्ते भारते व्याप्त्या यस्या

विद्यायाः सर्वतोमुखो विकासः संबभूव तस्याः स्वरूपमपि श्रुतौ वर्णितं दृश्यते। तदस्माकं विचारार्हम्। तेनापि भारतीयसंस्कृतेः विद्याप्रधानत्वं, तत्र विद्यायाः परदैवतत्वं चावगन्तुं शक्यते। विद्यासु ब्रह्मविद्याया अभ्यर्हितत्वं मुण्डकोपनिषदि स्पष्टैः शब्दैः प्रतिपादितं दृश्यते। तत्र हि श्रूयते "ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह। अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्।" एवं ब्रह्मा - अर्थवन् - अङ्गिरस-भारद्वाज इति ब्रह्मविद्यायाः प्रथमा गुरुशिष्यपरम्परा स्थापिता बभूव। विधिवदुपसन्नेन शौनकेन "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति" पृष्टे सति अङ्गिराः तस्मै विद्याया द्वैविध्यमवान्तरभेदांश्च कथयामास। तद्यथा "द्वे विद्ये वेदितव्ये इति स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः।

# दुर्लभं भारते जन्म

समस्ते भूमण्डले भारतमेव सर्वातिशायिनीं श्रेष्ठतां भजते। कृतपुण्यपुंजा जना एव भारतवर्षे जन्म लभन्ते। एतस्मिन् भूमण्डले सप्तद्वीपाः सन्ति। ते च जम्बूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करेति संज्ञकाः। ते मनोः पुत्रेण सप्तकृत्वो रक्षणे भुवं परिक्राम्यता निर्मिताः। तेषु जम्बूद्वीपस्य नवखण्डान्विधाय तद्द्वीपाधिपतिर्ऋषभदेवः एकस्मिन् खण्डे स्वपुत्रशतज्येष्ठं भरतं नाम प्रजापालनाय अभ्यषिंचत्। पूर्वमजनाभं नामैतद् वर्षं भरतनाम्ना भारतमिति विख्यातमभूत् इति पुराणेषु प्रसिद्धम्। पतंजलिमहर्षिणाऽपि स्वकीये पातंजलमहाभाष्ये शब्दप्रयोग विषयप्रसंगे सप्तद्वीपा वसुन्धरा, इति भणितम्। तस्यां वसुन्धरायां भारतवर्षतुल्यो नापरोदेशो वर्तते। स स्वकीयैरनेकविध- वैशिष्ट्यैर्विभूषितो भाति। न कोऽप्यन्योदेशस्तत्साम्यं प्राप्नोति। अत्रानेकाः पुण्यसलिलाः भुवनपावन्यः सरितः स्रवन्ति। अनेके कामदुघाः देववद् वन्दनीयाः शैलाश्च भारतभुवं भूषयन्ति। नदीषु भगवती भागीरथी तु जगत्प्रसिद्धैव। विष्णोः पादंगुष्ठाद् विनिःसृत्य ब्रह्मसदनं पावयन्ती शिवेन शिरसा धृता भारतभुवमवतीर्य धवलधारया भूमेर्हारावलीव विराजते। यस्यां स्नानार्थमागच्छतः पुरुषस्य पदे पदे अश्वमेधयज्ञादिफलं भवति। महाराजो भगीरथः कपिलशापेन दग्धान् स्वपूर्वजान् तारयितुं परमं तपः कृत्वा भारतभुवमानीतवान्। अतएव सा भागीरथीनाम्ना विख्यातिं लेभे। उक्तं च- 'भगीरथः स राजर्षिः निन्ये भुवनपावनीम्। यत्रस्वपितॄणां देहाः भस्मीभूताः स्म शेरते। यज्जलस्पर्शमात्रेण ब्रह्मदण्ड हता अपि। सगरात्मजा दिवं जग्मुःकेवलं देहभस्मभिः। भस्मीभूतांगसंगेन स्वर्याताः सगरात्मजाः। किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः।' एतादृश महात्म्यमण्डिता जगति न कापि सरित् श्रूयते। भारते अन्याश्चैवंविधा अनेका नद्यः सन्ति। यासामापः स्पर्शमात्रेण जनान् पुनन्ति। तथाहि कावेरीकृष्णागोदावरीनर्मदा गोमतीसरयू प्रभृतयः पुण्याः नद्योऽत्र बहन्ति। पर्वतेषु देवरूपो हिमालयः भारतस्य उदीच्यां दिशि विराजते। अग्निपुराणे उक्तम्- उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद् भारतं नाम, नवसाहस्र विस्तृतम्॥ अयं गिरिर्नानाविध विशिष्टतायुक्तोऽस्ति। ऋषीणां तपोभूमिः। नरनारायणौ अत्रैव

तपश्चर्यामकुरुताम्। भगवतः शंकरस्य निवासभूमिः कैलासोऽप्यत्रैव। निर्मलोदकं मानसं नाम सरोऽप्यत्रेव शोभते। अनेका दिव्यौषधयोऽपि लभ्यन्ते। किं बहुना कविकुलगुरुः कालिदासोऽपि तं देवरूपं वर्णयति। 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नागधिराजः। पूर्वापरौ तोयनिधीवगाह्य स्थितः पृथिव्या इव मानदण्डः॥'

ततोऽन्येऽपि गिरयो विराजमाना भारतस्य महिमानं सूचयन्ति। यथा महेन्द्रो मलयः चित्रकूटो विन्ध्यः पुण्यभूमयस्तपोभूमयश्च। भारतीयां संस्कृतिं विश्वस्य न कापि संस्कृतिः अतिशेते। सा सर्वासां संस्कृतीनां मूर्ध्नि तिष्ठति। अस्याः प्रभावेण भारतं जगद्गुरु अभवत्। इदं कथ्यते एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः। अस्याः संस्कृतेः प्रमुखतत्त्वानि धर्मार्थकाममोक्षाख्याः चत्वारः पुरुषार्थाः। देवर्षिपितॄणां ऋणत्रयम् चत्वारो वेदाः दर्शनानि उपनिषदः स्मृतयः महाभारतं अष्टादशपुराणानि आदिकाव्यं रामायणं साहित्यं संगीतं विविधाः कलाश्च ज्ञानवर्धनाय राजन्ते। अस्या उदारता एतेनैव प्रकटी- क्रियते यद् उदरपूर्तेरधिकसंग्रही चौरः दण्डनीयश्च- उक्तं च- 'यावद्भ्रियेतजठरं तावत्स्वत्वं हि देहिनाम्। अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥'

रामकृष्णबुद्धप्रभृतयोऽत्रैव भारते जन्म लेभिरे। भगवान् रामः मर्यादापुरुषोत्तमः शरीरधारी धर्म एवासीत् 'रामोविग्रहवान् धर्मः' इति कृष्णेन भूभारावतारणान्ते अर्जुनस्य मोहापहारकं यद् गीताज्ञानं प्रदत्तं मोहश्च नाशितः। तद्भुवि अनुपमं ज्ञानं वर्तते। अन्यच्च अत्रैव पुण्यतमानि तीर्थानि भारतीयान् पुनन्ति प्रभासं नैमिषं प्रयागः इत्यादयः। मोक्षदायिकाः सप्तपुर्योपि भक्तानां मोक्षप्रदानाय भजन्ति। 'अयोध्यामथुरामाया काशीकांचीअवन्तिका। पुरी द्वारावती ज्ञेया सप्तैता मोक्षदायिकाः।' प्रयागस्तु तीर्थराज एव यत्र त्रिवेणीसंगमे स्नानेन पुनर्जन्म न विद्यते। उक्तं च- समुद्रपत्न्योर्जलसंन्निपाते पूतात्मनामत्रकिलाभिषेकात्। तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः।'

इहैव भारते हरिश्चन्द्रसदृशाः सत्यपरायणा भूपा बभूवुः ये

कष्टपम्परामनुभवन्तोऽपि सत्यान्न व्यचलन्। शिवितुल्याः शरणागतरक्षकाः दध्यङ्समानाः रोप कारताः महर्षयश्च जन्मना भारतभुवमलंचक्रुः। येषांपवित्रतमा कीर्तिः जगत्त्रयं पुनाति। सुधार्तः रन्तिदेवः अतिथिसेवायै स्वमाहारं जलं च अतिथये समर्पयामास। भारते धर्मनिष्ठैर्भूपालैरनेके राजसूयाश्वमेधादयो यज्ञाः विहिताः सेयं भारतभूमिः कर्मक्षेत्रम्। अन्यानि अष्टौवर्षाणि स्वर्गिणां पुण्यशेषभोगस्थानानि सन्ति। तेन भारतवर्षस्य सर्वोत्कृष्टं माहात्म्यं विलोक्य देवा अपि अत्र जन्मग्रहणाय स्पृहयन्ति अस्य प्रशंसां कुर्वन्तोऽपि न विरमन्ति। तथा चोक्तम् -

'गायन्ति देवाः किलगीतकानि धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पद हेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात्॥'

ते देवा वदन्ति अहो एभिर्मानवैः कियत्पुण्यमाचरितम् ते भारते जनुः प्राप्य भगवत्सेवामाचरन्तो जीवनं यापयन्ति।

'अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुतस्वयं प्रभुः।
यैर्जन्मलब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः॥'

इन्द्रलोकेऽपि भगवतो महाविष्णोः कथासुधापानं न जायते। सर्वोत्तम-गुणभूषिताः सन्तोऽपि न सन्ति। येषां संगत्या हरिभक्तिर्भवेत्। न च यज्ञैर्भगवानिज्यते। एतादृशं सुरलोकं विहाय भारतभूमौ जायेमहि। येन अनेके लाभाः भविष्यन्ति। वदन्ति च- 'न यत्र वैकुण्ठकथासुधापगा न साधवो भागवता-स्तदाश्रयाः। न यत्र यज्ञेशमखामहोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम्। एतादृशमहत्त्वमण्डिते भारते जन्म तु पुण्यातिशयेनैव लभ्यम्। अतः सत्यमेवेदमुच्यते- 'दुर्लभं भारते जन्म।'

# 'त्याज्यं न धैर्यं विधुरेऽपि काले'

धैर्यं हि मानवस्य चित्तवृत्त्यात्मको भावविशेषः, यः साहित्यमर्मज्ञैः भरतादिभिः संचारिभावेषु परिगणितः। यश्च लोभमोहशोकभयादिजनितानाम् उपप्लवानां निवारणे असाधारणतया कारणी भवति। तात्पर्यमिदम्- धैर्यं मानसबलमूर्जयति, संवृद्धे च मनोबले मनुजः कृच्छ्रादात्मानम् उद्धर्तुं प्रभवति।

ऊर्जस्वले मनसि सर्वोऽपि चेतनः आपदम्बुधिम् उत्तरीतुं साधु क्षमते, अत-एव धैर्यं निरुपधि बन्धुरित्युच्यते।

एतद्धैर्यमवलम्ब्य स्वव्यापारनिरता एव धीरा उच्यन्ते ये स्वोद्देश्यमनवाप्य प्रारब्धान्न विरमन्ति।

पुरा अमृतप्राप्तये क्षीरोदमन्थनप्रवृत्ताः सुराः जलधिसमुद्भवाद् दुर्विषहाद् विषादपि भीतिमविगणय्य महार्हैः ऐरावतकौस्तुभादिरत्नैरपि सन्तोषमनवाप्य अमृतोपलब्धये एव अविरतं प्रायतन्त। अन्ततोऽमृतं प्राप्यैव सन्तुष्यव्यरमन् तमेवार्थं कविराह-

'रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम्।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद् विरमन्ति धीराः॥'

मनीषितोपलब्धये सर्वत्र धैर्यमेव असाधारणतया प्राणिमात्रस्योपकरोति इति नापरोक्षं प्रेक्षावताम्। अत्र विषये नितरां संस्तुतं गजेन्द्रमोक्षोपाख्यानं संस्मर्यते-

पुरा पाण्ड्यदेशे इन्द्रद्युम्नाख्यो राजा मुनेरगस्त्य शापात् कुञ्जरयोनिं प्राप्तः। हूहूर्नाम गन्धर्वश्च महर्षिदेवलशापाद् ग्राहतां गतः। कालक्रमेण करेणुभिः कलभैश्च अनुद्रुतः स गजराजः तृषार्दितः सन् तद्ग्राहाधिष्ठितं सरः उपासात्। तत्र यथेच्छमवगाहमानं तं स ग्राहो रुषा चरणमग्रहीत्। यथावतामात्मानमुद्धर्तुं प्रयतमानोऽपि गजेन्द्रः कृच्छ्रादात्मानम् उन्मोचदियतुं नाशकत्।

ततस्तु स प्राग् जन्मस्मृत्युपलम्भाद् धैर्यमवलम्ब्य भगवन्तं नारायणं सस्मार। स्मृतमात्रः सचक्रः स सपदि तत्राविर्भूय तमुज्जहार। यथा श्रीमद्भागवते-

"सोऽन्तः सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्।

उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्राद् नारायणाखिलगुरो भगवन्नमस्ते॥

एतेन सुस्पष्टं भवति यद् धैर्यं प्राणिमात्रस्य कियदुपकरोतीति॥

धैर्यस्य ह्रास एव मनोबलमूनयति, मनोबले ह्रासमुपगते ध्रुवः पराजयः। पार्वत्यां शिवानुरागं जनयितुं प्रेर्यमाणो मदन अमराधिपम् आश्वासयन् व्याहरति- यथा कुमारसंभवे कालिदासः

"तव प्रसादात् कुसुमायुधोपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये।"

ततश्च "हरोऽपि किंचित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः। उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि"। इति धैर्यं हृदि साहसं संचारयति, तत् साहसं च उद्यमप्रयोजकं भवति- इत्थम् उद्यम प्रवृत्तौ दैवमपि सहायकं भवति उक्तं च-



'उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते तत्र दैवं सहायकृत्।'

बलवद्धैर्यम् आशातीतां सिद्धिमुपाहरति एवं हि श्रूयते पुरा किल विमातुः वाग् बाणविद्धः ध्रुवोनाम उत्तानपादतनयः अल्पीयस्येववयसि कृच्छ्रं तपश्चरिष्यन् धैर्यावष्टम्भात् क्लेशानशेषान् अविगणय्य अविचलितस्तपसि तिष्ठन् भगवन्तं वासुदेवं प्रसाद्य प्रसन्नात् तस्माद् अनन्यलभ्यं सर्वलोकनमस्कृतं ध्रुवपदं प्रपेदे।

ऐक्ष्वाको नृपतिभगीरथः सगराध्वरे यज्ञतुरगान्वेषणव्यग्रान् कपिलमहसा प्लुष्टान् स्व पूर्वजान् पूततमेन गङ्गाम्भसा पावयिष्यन् धैर्यातिरेकाद् अगणिततनूतापं तपांसि तप्त्वा भगवन्तमजंशिवं च प्रसाद्य भगवतीं गङ्गां भुवमवतारयामास। तत एव सा 'भागीरथी' इत्यपि लोकैर्गीयते, अतितरां श्लाघनीयश्च नृपतिव्यापारः अधुना भगीरथप्रयासः' सद्भिः संस्तूयते।

सागरप्लवनादि सिंहिकाहननान्तं मारुतेः कर्मजातमार्गं वीक्ष्य सिद्ध-

विद्याधरादयोगगनचारिणस्तमेवं प्रशशंसुः यथा वाल्मीकीये सुन्दरकाण्डे - 'यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव।

धृतिदृष्टिर्मतिर्दाक्ष्यं न कर्मस्ववसीदति।' इति धैर्यशालिनि, अनिर्वेद-संयम-शान्ति-सन्तोष- साहस-सहिष्णुता प्रत्युत्पन्नमतित्वादयो बहव एष्टव्या गुणाः स्वयम् उद्भवन्ति।

लङ्कामुपगतो हनूमान् सीतां विचिन्वन् यदा रावणप्रसादेषु न चिरादपि ताम-वलोकयामास तदा स्वपरिश्रमस्य वैकल्पमिवविगणयन् कंचित्कालं निर्विण्ण इवाभवत्। परं धैर्यातिरेकात् सपद्येव निर्वेदं निरस्य प्रत्युत्पन्नमतित्वाद इत्थं जगौ- तथा हि सुन्दरकाण्डे-

'अनिर्वेदः श्रियोमूलम् अनिर्वेदः परं सुखम्।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः॥
करोति सफलं जन्तोः कर्म यच्च करोति सः।
तस्मादनिर्वेदकरं यत्नं चेष्टेऽह्युत्तमम्।

एवम् अनिर्वेदाच्चेष्टमानः स सीतामार्गणे सफलो जातः। धैर्यातिशयेन रघुः सुरेन्द्रमपि तोषयामास इत्थम् ऐतिह्यम् महाराजदिलीपस्य शततमे यज्ञे प्रवृत्ते यज्ञाश्वं गूढविग्रहः शक्रो जहार नन्दिनी प्रसादाद् उपलब्ध दिव्यचक्षुः यज्ञाश्वरक्षको रघुस्तं ददर्श। मेध्यमश्वम् अमुञ्चता तेन सह युध्यमानः तस्य रथध्वजं धनुर्ज्यांच चिच्छेद। भृशं कुपितः स महेन्द्रः वज्रं प्राहरत्। वज्राहतः क्षणं मूर्च्छां विधूय स रघुः पुनर्युद्धाय समवस्थितः। तदा तु तस्य धैर्यातिरेकमवलोक्य स वासवस्तुतोष, ईप्सितं च वरं दत्वा यथागतं निर्ययौ। तथा हि रघुवंशे कालिदासः।

"रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः।
निमेष मान्त्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः॥
तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः।
तुतोष धैर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते॥"

किं बहुना सद्गुणसमवायोहि धैर्यम्, अतएव सुजनैः धैर्यमवलम्ब्य विषमायामपि

परिस्थितौ सर्वदुःखजातं सोढव्यम् यतो हि सुखदुःखचक्रम् अहोरात्रचक्रमिव सततं परिवर्तमानं परिलक्ष्यते यथा दिवसस्य रात्रेर्वा निरन्तरावस्थानं न श्रुतपूर्वं न वा दृष्टपूर्वम् तथैव मनुजस्य सुखं दुःखं वा अविरतं कदापि न संभवति एतत् संप्रधार्य दुःखजातम् आयातम् अनुभूय कदापि नोद्विजेत परं धैर्येण अनुद्विग्नमनास्तिष्ठेत् कथितं च 'चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च' भासोप्याह - 'कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपंक्तिः' तमेवार्थं विशदयन् कालिदासोऽप्याह-

'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्तो वा,
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥ '' इति

धैर्यवन्तो हि महाजनाः सर्वातिशायि कार्याणि कुर्वाणाः यत्र तत्र सर्वत्र विश्रुताः।

पाश्चात्यः कोलम्बसनामा कुतुकाद् जलप्रवहणेन समुद्रं पारयन् प्राग् अमेरिका महाद्वीपम् अनन्तरम् च भारतम् अन्वेष्टुं प्रबभूव।

एवमेव रावन्सिनक्रूसो प्रभृतयोऽनेके धैर्यधारिधौरेयाः पारावारीणाः परिगण्यन्ते।

साक्षात् स्वातन्त्र्यविग्रहो महाराजः प्रतापसिंहः धैर्यसहाय एव स्वजीवने अनेकधा कष्टानि विषेहे।

धैर्यं हि मानवस्य बन्धुः, अतएव तदाश्रयणं श्रेयष्करम् तस्य त्यागस्तु दोषावहः। अतएव कविः सुहृदिव जनानुपदिशति यद् मनुजेन धैर्यं न कदापि त्याज्यम्। धैर्यावष्टम्भेन कृच्छ्रेऽपि सुस्थितिः सुलभा। समुद्रेऽपि पोतभङ्गे जाते पोतवणिग्जनः काष्ठफलकादिना पारं प्राप्तुं प्रयतते एव। तथाहि-

"त्याज्यं न धैर्यं विधुरेऽपि काले,
धैर्यात् कदाचित् स्थितिमाप्नुयात् सः।
जाते समुद्रेऽपि च पोतभङ्गे,
सांयात्रिको वाञ्छति तर्तुमेव॥"

# भारतीयकविशासकः शालिवाहनहालः

भारतीया भूपालाः न केवलं शासनकार्यकुशला बभूवुस्ते काव्य रचना- दक्षा अपि अभूवन्। तेषु अन्यतमः शालिवाहनो नाम भूपो बभूव तस्यैव सातवाहन इति अपि नामान्तरम्। गजनीनरेशस्यैकः पुत्र आसीत् यम् अंके निधाय सात-नामोगुह्यको वहति स्म। तेनाऽसौ सातवाहननाम्ना लोके प्रसिद्धिं प्राप। इत्येषा कथा कथासरित्सागरे समुपलभ्यते। स एव शालिवाहन इति अपरं नाम लेभे। तेन शकसंवत्सरोऽपि प्रवर्तितः। एतस्य विस्तरेण वर्णनं भविष्यपुराणे द्वितीयाध्याये कृतमस्ति। महाराजे विक्रमादित्ये दिवंगते अष्टादशराज्यानि भारते निर्मितानि। गच्छता कालेन विक्रमादित्यस्य पौत्रः शालिवाहनो नाम स्वपितू राज्यं जग्राह तथा चोक्तं भविष्यपुराणे- 'स्वर्गते विक्रमादित्ये राजानो बहुधाऽभवन्। तथाष्टा-दश राज्यानि तेषां नामानि मे शृणु। पश्चिमे सिन्धुनद्यंते सेतुबन्धेहि दक्षिणे। उत्तरे वदरीस्थाने पूर्वे च कपिलान्तिके।' तानि च इन्द्रप्रस्थ- पांचाल-कुरुजांगल-कापिलेत्यादिनामकानि राज्यानि प्रसिद्धानि। अन्यच्च भविष्ये पुराणे वर्णितम्- 'एतस्मिन्नन्तरे तत्र शालिवाहनभूपतिः। विक्रमादित्यपौत्रश्च पितृराज्यं गृहीतवान्। जित्वा शकान् दुराधर्षान् चीनतैत्तिरिदेशजान्।'

बाल्हीकान् कामरूपांश्च रोमजान् खुरजान् हठान्। तेषां कोशं गृहीत्वा च दण्डयोग्यानकारयत्।।

तस्यैवापरं नाम हालः इत्यासीत्। बाणभट्टः स्वहर्षचरितकाव्यस्य प्रारम्भे सातवाहनं स्मरति।

अविनाशिनमग्राम्यमकरोत्सातवाहनः। विशुद्धजातिभिः कोषं रत्नैरिव सुभाषितैः। इदं नाम पुराणेषु आन्ध्रभृत्यानां वंशवर्णनप्रसंगे भणितम्। हाल कविना रचितो गाथासप्तशती नाम काव्यग्रन्थः सुप्रसिद्धोऽस्ति। अस्य ग्रन्थस्य रचनाकालविषये विदुषां मतभेदो वर्तते। किन्तु नवीनतमशोधकार्यानुसारेण प्रथमशताब्द्यां हालस्य कवेः स्थितिकालो निश्चीयते। अस्मिन्ग्रन्थे आर्याछन्दोनिबद्धानां सप्तशतगाथानां संग्रहोऽस्ति एतासां गाथानां रचना

माहाराष्ट्रीप्राकृतभाषायां विहितास्ति।

एतस्मिन् ग्रन्थे ग्राम्यजीवनस्य नैसर्गिकानुभूतयः शृंगारादि समस्तरसाप्लुता विषयाः नायिकाभेदाः प्रकृतिवर्णनं ऋतुवर्णनं श्रृंगारेतरानेके विषयाः वर्णिताः दृश्यन्ते। अत्र कुत्रचित् पद्येषु तात्कालिकसामाजिकप्रथानां प्रकाशो दृश्यते। प्राकृतिक दृश्यानां वर्णनं मौलिकसुन्दरोपमापूर्णं विलोक्यते। यथाहि तृणानामग्रभागेषु स्थिताः दीप्यमाना जलविन्दवो मरकतसूचीविद्धानि मुक्ताफलानीव राजन्ते ते च मृगैर्लिह्यमानाः सन्ति। क्वचिन्मेघमण्डलमध्ये कम्पमाना विद्युत्मेघानां प्राण इव कम्पमाना प्रतीयते। क्वचित् कुमुददलेषु उपविष्टानिश्चलाः कृष्णमधुपाः अन्धकारग्रन्थय इव राजन्ते। तदुदाहरणस्य संस्कृतरूपान्तरं उपस्थाप्यते।

राजन्ति कुमददलानिश्चलस्थिता मत्त मधुकर निकायाः।

ग्रन्थय इव तिमिरस्य हि शशिकरनिःशेषनाशितस्येमाः॥ सज्जनलक्षणवर्णनं पश्यत- उदरं भरन्ति शकुना अपि हे मातरात्मनोऽनुद्विग्नाः। विह्वलोद्धरणस्वभावा भवन्ति यदि केऽपि सत्पुरुषाः। तदेव सन्मित्रं यत् स्वमित्र विपत्तौ सत्यां मित्रं न त्यजति। तन्मित्रं कर्तव्यं यत्किलव्यसने देशकालेषु॥ आलिखितभित्तिपुत्तलकमिव न पराङ्मुखो भवति।

सरलानां कुटिलानां च मैत्रीसम्बंधः कदापि न स्थिरो भवति। यथा हि कुटिलं धनुः सरलान् गुणग्राहिणो बाणान् दूरतरं क्षिपति चापः स्वभावसरलं क्षिपति शरं किल गुणेऽपि निपतन्तम्। ऋजुकस्य च वक्रस्य च संबन्धः किं चिरं भवति?

कतिपयानि ग्रामीणजीवनचित्राणि द्रष्टव्यानि - कृषकस्य मुग्धा पुत्रवधूरेकां नवीनां रंजितां शाटीमुपलभ्य असीमोल्लासपूर्णा ग्रामस्य विस्तीर्णमार्गेऽपि सा तन्वी न समाविशति।

भोजननिर्माणावसरे पत्न्या मुखे लग्नं कालिमानं दृष्ट्वा स्मयमानः तस्याः पतिर्ब्रूते अधुना तवमुखे चन्द्रे च न किंचिदन्तरं विद्यते। गेहिन्या माहानसकर्म मसीमलिनितेन हस्तेन।

स्पृष्टं मुखमुपहसति चन्द्रावस्थां गतं दयितः॥

रुचिरां एकामन्यामन्योक्तिं पश्यन्तु

ईषत्कोषविकासं यावन्नाप्नोति मालती कलिका।
मकरन्दपानलोलुपमधुकर किं तावदेव मर्दयसि।।

किं बहुना गाथासप्तशत्या अनेका गाथा: आलंकारिकैराचार्यैः स्वेषु स्वेषु ग्रन्थेषु उदाहरणस्वरूपेण दर्शिताः। एतामादर्शभूतां पुरस्कृत्य आचार्याः संस्कृतभाषायां हिन्दीभाषायां च सप्तशतीरचनामकुर्वन्। उदयसुन्दरी कथा रचयिता सोड्ढलःकविः हालकविं प्रशंसन् ब्रूते अद्यापि हालं स्मरतां सहृदयानां मुखात्पूर्वं हा, इत्यक्षरं निःसरति।

हाले गते गुणिनि शोक भराद् बभूवुः।
उच्छिन्न वाङ्मयजडाः कृतिनस्तथामी।।
यत्तस्य नाम नृपतेरनिशं स्मरन्तो।
हेत्यक्षरं प्रथममेव परं स्मरन्ति।।
तव मुखसादृश्यं नो लभत इति हि पूर्णमण्डलो विधिना।
घटयितुमिवान्यमयमिव पुनरपि परिखंड्यते शशभृत्।।

## माघे सन्ति त्रयो गुणाः

'उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥'

इत्युक्तिः संस्कृतसाहित्येऽतिप्रसिद्धास्ति। अस्यायमर्थः उपमायाः प्रयोगे कालिदासः, अर्थगाम्भीर्यप्रकाशने भारविः, ललितपदसंङ्घटनायाञ्च दण्डीकविर्विशिष्यते। माघकवेः शिशुपालबधाख्ये महाकाव्ये त्रयाणामप्येतेषां गुणानां सम्यक् प्रयोगो लभ्यते। उपमायाः समीचीनतया प्रयोगः, गुर्वर्थव्यञ्जकता, ललित- पदानां विन्यासश्चैतेषां त्रयाणामपि गुणानां सन्निवेशः पदे पदे सुचारुतया कृत उपलभ्यते। अतः सत्यमुक्तं काव्यमर्मज्ञेन केनचित् कविना- 'माघे सन्ति त्रयोगुणाः।' इति

शिशुपालबधमहाकाव्ये रमणीयोपमाऽलङ्कारस्य प्राचुर्येण प्रयोगः समुपलभ्यते यथा-

'नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम्।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना,
स्फुटोपमं भूतिसितेन शम्भुना॥'

अत्र हस्तिचर्मकृतोत्तरीयेण भस्मना सितेन भगवता शिवेन नवाम्बुपूर्णश्याम-जलधराणामधस्तादाकाशे वर्तमानस्य कर्पूरचूर्णपुञ्जवद्गौरवर्णस्य देवर्षेर्नारदस्यौ-पम्यमतिसमीचीनम्। तथा च-

"दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम्।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव॥"

अत्र तुहिनस्थल्यां जाताभिः लताभिराच्छादितपर्वतराजेन हिमवता कमलकिञ्जल्कवत्पीतवर्णजटाधारिणो नारदस्योपमाऽतिरमणीया॥ अपरञ्च -

'पतत्पतङ्गप्रतिमस्तपोनिधिः

पुरोऽस्य यावन्न भुवि व्यलीयत।
गिरेस्तडित्वानिव तावदुच्चकै-
र्जवेनपीठादुदतिष्ठदच्युतः॥'

अत्र तपोनिधेरतितेजस्विनो नारदस्य सूर्येणोपमा समीचीनतरैव। अपरञ्च-

'स तप्तकार्तस्वरभास्वराम्बरः
कठोरताराधिपलाञ्छनच्छविः।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः॥'

अत्र समुद्रोपमो हरिः। वाडवाग्नितुल्यं देदीप्यमानं तप्तसुवर्णवद्भास्वरमम्बरं दधानः शोभते इत्युपमा प्रकर्षः।

'उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।

वर्धमानः शत्रुः नोपेक्षणीयः यतो हि वर्धमान रोगतुल्यः सोऽतीव हानिप्रदो भवतीत्युपमामुखेनात्र स्फुटीकृतम्।

शत्रुंप्रतिक्रोधेनोपरक्ते शरीरे सक्तानां स्वेदबिन्दूनामरुणवर्णसान्ध्याकाशे स्फुरन्तीनां ताराणां सादृश्यमतिरोचकतामावहति -

'दधत्सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः।'

तथा च -

'सामवादाः सकोपस्य तस्य प्रत्युतदीपिकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः॥'

दुष्टबुद्धिर्मनुष्यः सान्त्वनावचनैर्न शान्तिमेति

अपि तु सान्त्वनावादाः प्रतप्तस्य घृतस्य जलबिन्दव इव प्रज्वलनकारिण एव भवन्ति।

'प्रदीयसीमपि घनामनल्पगुणकल्पिताम्।
प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव॥'

कुशलाः वक्तारः सुकुमाराक्षरामपि श्लेषादिभिर्गुर्विचित्रां वाचं कोमलतन्तुभिर्निर्मितां शाटीमिव विस्तारयन्ति।

'अरुणजलजराजी मुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव॥'

अत्र भ्रमरावल्या कज्जलस्य, इन्दीवरपुष्पैर्नेत्रयोः, अरुणाम्भोजैर्हस्तयोर्पादयोश्च, पक्षिणां कलरवैरालापस्यौपम्येन मातरं सुतेव रजनीमनुधावन्त्याः प्रभातसन्ध्यायाः वर्णने उपमालङ्कारस्य अति हृदयग्राही प्रयोगः।

इत्थमस्मिन्महाकाव्ये प्राचुर्येणोपमालङ्कारस्याति समीचीनतया सन्निवेशो विहितः, अतोऽस्याऽलङ्कारस्य प्रयोगे कालिदासापेक्षया माघो न कथमप्यूनः।

अर्थगाम्भीर्यदृष्ट्यापि माघः महाकवेर्भारवेः न कथमपि हीनः, यतोऽस्य काव्ये गुर्वर्थव्यञ्जकानां श्लोकानां बाहुल्यं वर्तते। अत्रोदाहणार्थं केचन श्लोकाः निर्दिश्यन्ते-

'उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर विश्वमीशिषे।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः॥'

हे विश्वम्भर कृष्ण! कंसादिभिर्दुष्टैरुपप्लुतमिदं जगद् भवानेव त्रातुं समर्थः, न कोऽप्यन्यः। यतो हि अतितेजस्विनं सूर्यं विना कोऽन्यो रात्रेर्घनमन्धकारं गगनतलादपसारयितुं क्षमः। अन्यच्च -

अनियन्त्रितं बलमन्यत्, नीत्यनुसारिबलञ्चान्यत्। तेजस्तिमिरयोरिव अनयोःसामानाधिकरण्यं कथं सम्भवति। तदेवं निरर्गलबलशालितयाऽस्माभिः पदे पदे शास्त्रचिन्तां परित्यज्य शत्रोर्विनाश एव कर्तुमुचितः इति गुरुतरोर्थ अस्मिन्लघुनि

पद्ये प्रकटी कृतः-

'अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः॥'

तथा च-

'जगत्पवित्रैरपि तन्नपादैः
स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः।
यतो बृहत्पार्वण चन्द्रचारु
तस्यातपत्रं विभराम्बभूव॥'

भगवान् सूर्यः जगत्पूज्यैरपि स्वकीयैः किरणैरेव पादैः जगत्पूज्यं हरिं स्प्रष्टुं नार्हतीति पादैर्गुरोः स्पर्शनमनुचितमित्यत्र निदर्शितम्, हरेर्महन्महत्त्वञ्च व्यञ्जितम्।
अपि च-

'अमानवं जातमजं कुले मनोः
प्रभाविनं भाविनमन्तमात्मनः।
मुमोच जानन्नपि जानकीं न यः
सदाभिमानैकधना हि मानिनः॥'

स रावणः अमानुषमीश्वरं, मनोः कुले जातं रामं, तस्य प्रभावं, तस्मात् स्वकीयं भाविनं विनाशञ्च जानन्नपि सीतां न तत्याज, यतोहि मानिनः सदा अभिमानैकधना भवन्ति।

पदलालित्यन्तु माघकृते महाकाव्ये पदे पदे समुपलभ्यते। असौ महाकविः ललितपदानां निबन्धने दण्डिनो न कथमप्यवर अपि तु तमतिशेते।

'महा महानीलशिलारुचः पुरो
निषदिवान् कंसकृषः स विष्टरे।
श्रितोदयाद्रेरभिसायमुच्चकै-
रचूचुरच्चन्द्रमसोऽभिरामताम्॥'

अत्र इन्द्रनीलशिलावत्कान्तिमतः श्री कृष्णस्य पुरतः स्वर्णासने समुपविष्टस्य नारदस्य शोभा कविना सुललितया पदावल्या वर्णिता। तथा च-

'नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः॥'

इत्थं सुस्पष्टं भवति यत् माघकाव्ये त्रयोगुणाः साधुतया सन्निविष्टाः सन्ति। अतः 'माघे सन्ति त्रयोगुणा' इत्युक्तिः समीचीनैव।

# रसवादः

भारतीयनाट्यशास्त्रस्य, अलंकारशास्त्रनाम्ना विख्यातस्य च काव्यशास्त्रस्य प्रसिद्धेषु बहुषु वादेषु मुख्यतमोऽयं रसवादो नाम। प्रथमं तावद् नाट्यविषये भरतमुनिना वादोऽयं स्वकीये नाट्यशास्त्रे प्रतिपादितः। तत्र मुनेरयमेवाभिप्रायो यद्रूपकं किञ्चिल्लिखित्वा तत्प्रयोगपथमवतारयतः कवेः सहृदयसामाजिकचेतसि रसस्य समुद्बोधनमेव मुख्यमुद्देश्यमिति।

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति''

इदमेव रससूत्रत्वेन प्रसिद्धं वाक्यम्। अस्य व्याख्यां कृतवद्भिर्भट्टलोल्लटभट्टश्रीशङ्कुकभट्टनायकभट्टाभिनवगुप्ताचार्यभोजराजप्रभृतिभी रसस्वरूपनिरूपणे महान् प्रयत्नः कृतः। तत्र यथा भट्टाभिनवगुप्ताचार्यैः रसस्य स्वरूपानिरूपणं कृतं तथैव प्रायेण सर्वैरपि भारतीयैरर्वाचीनैः काव्यतत्त्वविद्भिस्तत् स्वीकृतम्।

एवं विकासं गच्छति नाट्यगतरसस्वरूपनिरूपणप्रस्थाने काव्यस्वरूपतद्विभाग-तल्लक्षणादि कर्मसु प्रवृत्ताः काव्यतत्त्वविदो भामहप्रभृतय आलंकारिकाः। तेषु नवीनध्वनिप्रस्थानप्रतिपृष्ठाकानन्दवर्धनाचार्यैः काव्यस्य ध्वनिगुणीभूतव्यङ्ग्ययचित्राख्यभेदत्रयमङ्गीकृतवद्भिरुत्तमकाव्यस्य ध्वनेः वस्तु-अलङ्कार रसादिरूपभेदत्रयं प्रोद्घोष्य पूर्वप्रवृत्तरसप्रस्थानं स्वकीयध्वनिप्रस्थानेऽन्तर्भावितम्, येन तैः रसध्वनेरेवोत्कृष्टकाव्यत्वं साधितम्।

रसस्वरूपं श्रोतृदृष्ट्या कविदृष्टया च निरूपयितुं शक्यते। शास्त्रे मुख्यतः श्रोतृदृष्ट्यैव रसस्वरूपनिरूपणं कृतं दृश्यते। महाकवीनां काव्येभ्यः सहृदयैर्योऽर्थः प्रतीयते तस्य वाच्यो व्यङ्ग्यश्चेति द्वौ भेदौ भवतः। तत्र वाच्यो नाम वनितावदनोद्यानेन्दूदयादिः प्रसिद्धो लौकिकोऽर्थः। अस्य वाच्यार्थस्योपमादयो बहवः प्रकाराः काव्यलक्ष्मविधात्रिभिर्विद्वद्भिः शास्त्रे बहुधा व्याकृता दृश्यन्ते। व्यङ्ग्यार्थस्तु वाच्याद् बाढं भिन्नः, अङ्गनासु प्रसिद्धावयवातिरिक्तं लावण्यमिव विभाति। स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्कारा

रसादयश्चेत्यनेकप्रभेदभिन्नः। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वं स्पष्टं दृश्यते। अयं च व्यङ्ग्यार्थो मुख्यतया प्रकाशमानः सन् ध्वनिसंज्ञकस्योत्तमकाव्यस्यात्मा भवति। यदा स वस्तुरूपोऽलंकाररूपो वा भवति तदा स वाच्यार्थापेक्षया क्रमेण भासते। प्रथमं वाच्यर्थस्य तदनन्तरं वस्तवलंकाररूपव्यङ्ग्यार्थस्य प्रतीतिरिति भावः। रसादिरूपो व्यङ्ग्यार्थोऽपि वस्तुतो वाच्यापेक्षया क्रमेणैव प्रतीयते। अयं तु विशेषो यद् विद्यमानोऽपि क्रमो न संलक्ष्यते। अत एव तादृशमङ्गित्वेन भासमानं रसाद्यभिव्यञ्जयत् काव्यमसंलक्ष्यक्रमव्यङ्ग्यध्वनिरित्युच्यते। रसादिरर्थो हि वाच्येन सहेवावभासते। श्रोतृदृष्ट्या रसनिरूपणे प्रवृत्तैराचार्यैर्या रसप्रक्रियोक्ता तत्र कानिचित्तत्त्वानि महतीं प्रसिद्धिं गतानि। तद्यथा - अलौकिकप्रसन्नमधुरौजास्विशब्दसमर्थमाणत्वात् प्रमदोद्यानकटाक्षादीनां लौकिककारणत्वादिपरिहारः। विभावनानुभावना समुपरञ्जकत्वरूपैर्व्यापारैस्तेषां विभावादिशब्दव्यपदेश्यत्वम्। एतेषां विभावादीनां न ताटस्थ्येन प्रतीतिः अपि तु प्रमातुर्हृदयसंवादात् पूर्णीभवद्रसास्वादङ्कुरीभावेन तन्मयीभवनोचितचर्वणा प्राणतया। ततः श्रोतृधियि सम्यग् योगस्य संबन्धस्त्व्यैकाग्र्यासादनम्। वासनात्मतया स्थितस्य स्थायिनः समुद्बोधनं तस्य च रसनात्मकवीतविघ्नप्रतीत्या ग्रहणम्। एतन्मुख्यतत्त्वकृतमेव रसस्य रसत्वम्। यस्यां प्रतीता वेतानि तत्त्वानि नोपलभ्यन्ते तस्याः प्रतीतेः सामाजिकदृष्ट्या रसप्रतीतित्वं न स्वीक्रियते शास्त्रकारैः।

अत्रायं प्रश्नः समुल्लसति किं कवेरपि रसास्वादो भवितुमर्हति न वेति। अत्र माणिक्यचन्द्रप्रभृतयो विद्वांसो मन्यन्ते यत् सामाजिकस्यैव रसास्वादो भवितुमर्हति, न कवेरिति। 'कविरेव हि जानाति कवेः कार्यपरिश्रमम्' इति न्यायेन रसानुगुणशब्दार्थान्वेषणपरस्य कवेः कथं रसास्वादो भवितुर्महति। काव्यनिर्माणिदशायां शब्दार्थान्वेषणदुःखमग्नस्य निर्माणानन्तरं स्वनिर्मितं काव्यं सहृदयरूपेण शृण्वतः कवेः कदापि रसास्वादो न भवितुमर्हतीति। परं त्वाचार्याभिनवगुप्तकृतलोचनाभिनवभारसोरन्यादृशानि कानिचिद् वाक्यानि समुपलभ्यन्ते यानि विचारार्हाणि सन्ति। 'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः'' इति भट्टतौतवचनमनुवदद्भिः स्वयं च 'कविगतो रसः, कविर्हि सामाजिकतुल्य एव' इति च वदद्भिराचार्याभिनवगुप्तपादैः

कवित्वसहृदयत्वयोर्भेदं सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते इत्यत्रान्यत्र चाभ्युपगच्छन्द्भिरपि स्पष्टमेव कवेरपि रसास्वादः स्वीक्रियते। काव्यस्य रस एव सारभूतोऽर्थः, आदि कवेर्वाल्मीकेः

'क्रौञ्चद्वंद्ववियोगोत्थः शोकः श्लोकत्वमागतः'

इति वदद्भिरानन्दवर्धनाचार्यैरपीदमेव तत्त्वमङ्गीकृतं प्रतिभाति। तैर्या रामायणकथात्र परामृष्टा सावश्यं स्मर्यत एव सर्वैः। निषादेन निपातितं क्रौञ्चं दृष्ट्वा ऋषेर्वाल्मीकेः कारुण्यभवत्। रुदतीं क्रौञ्चीं निशम्य

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

इति श्लोकं व्याजहार मुनिः। कथामिमामवलम्ब्य ध्वन्यालोके लोचने च यदुक्तं तत् स्वल्पमपि मननार्हमस्माकं सर्वेषाम्। तद्वचनानामयेव सारांशो यन्मुनिना वाल्मीकिनानिषादनिहतसहचरविरहकातरक्रौञ्च्याक्रन्दनं श्रुत्वा करुणरसोऽनुभूतः। यश्च 'मा निषाद' इति श्लोक उदीरितः स तस्यैव करुणरसस्य समुच्चलनरूप इति।

अत्रेदं विचारणीयम्- क्रौञ्चवृत्तान्तदर्शनेन मुनेर्वाल्मीकेर्योऽनुभवः संजातस्तस्मिन् सामाजिकरसानुभवप्रक्रियागतानि तत्त्वानि समुपलभ्यन्ते न वेति। 'नोपलभ्यन्ते' इति केषाञ्चिदभिप्रायः। प्रथमतस्तावन्मुनेर्वाल्मीकेर्योऽनुभवः संजातः स न काव्यश्रवणाद्वा नाट्यदर्शनाद्वा संजातः। अतो निहतस्य क्रौञ्चस्य कथमलौकिकालम्बनविभावत्वम्। यतस्तस्य लौकिककारणत्वमेव भवितुमर्हति। क्रौञ्च्याक्रन्दनस्य च लौकिकं कार्यत्वं सहकारित्वं वोचितं नानुभावत्वं व्यभिचारित्वं वा। विभावादीनामेवाभावात् कथं तदायत्तानां प्रक्रियागतानामन्येषां साधारणीकरणहृदयसंवाद-तन्मयीभवनादीनां तत्त्वानां तत्र सद्भावः स्यात्। एवं मुनेर्वाल्मीकेः कथं करुणरसप्रतीतिः स्वीकर्तुं शक्यते इति।

अस्याक्षेपस्य समाधानमस्माभिर्लोचनगतादेव वचनात् कर्तुं शक्यते। तच्चेदम्- क्रौञ्चस्य द्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसनोत्थितो यः शोकः

स्थायिभावो निरपेक्षभावत्वात् विप्रलंभशृङ्गारोचितस्थायिभावादन्य एव स एव तथाभूतविभावतदुत्थाक्रन्द्याद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमाद् आस्वाद्यमानतां प्रतिपन्नःकरुणरसरूपतांलौकिकशोकव्यतिरिक्तां स्वचित्तद्रुति समास्वाद्यसारां प्रतिपन्नः रसपरिपूर्णकुम्भोच्चलनवत् चित्तवृत्तिनिष्पन्द-रूपवाग्विलासादिवच्च समयानपेक्षत्वेऽपि चित्तवृत्तिव्यंजकत्वादिति नयेनाकृतकतया आवेशवशात् समुचितशब्दच्छन्दो- वृत्तादिनियन्त्रितरलोकरूपतां प्राप्तः मा निषादेति।

# संस्कृते विलोमकाव्यानि

संस्कृतसाहित्यं हि महोदधिकल्पं विशालं गभीरं च। रत्नाकरेऽस्मिन् किं किं न लभ्यतेऽन्वेषकैः ? अत्र खलु महाकविकालिदासभवभूतिभर्तृहरिप्रभृतीनां विदग्धं विश्वमनोहारिभावरसपरिपूर्णं काव्यं यथोपलभ्यते- तथैव भारविमाघश्रीहर्ष प्रभृतीनां विद्वदौषधरूपं पाण्डित्यप्रचुरं बौद्धिकचमत्कारजनकं काव्यमपि दृष्टिपथमायाति। यद्यपीदृशं काव्यं चित्रकाव्यं यदधमत्वेन गर्हितं साहित्यशास्त्रकृद्भिस्तथापि राजमान्यतया वा लोमान्यतया वा पाण्डित्य प्रदर्शनलालसया वा ख्रिस्तीयषष्ठशताब्द्युत्तरमीदृशकाव्यस्यैव बाहुल्येन रचना कृता कविभिरिति सुस्पष्टं ज्ञायते। एतेषां कवीनामग्रणीः किल महाकविर्भारविर्योऽर्थगौरवेणापि विख्यातः। किंत्वनेन कविना सविशेषं स्वकीयकिरातार्जुनीयकाव्यस्य पञ्चदशे सर्गे चित्रकाव्यानामादर्श इवोपन्यस्तो य उत्तरकाले बहुभिः कविभिरनुकृतः। अस्मिन्नेव पञ्चदशे सर्गे भारवेः किरातार्जुनीयस्य विलोमकाव्यस्यापि प्रारम्भो द्रष्टुं शक्यते न हि तत्पूर्वमीदृशं काव्यं केनापि प्रणीतमुपलभ्यते। उत्तरकालीनं त्वस्य विस्तरमग्रेऽवलोकयिष्याम एव।

अथ किं खलु विलोम काव्यं नाम ? न खलु साहित्यशास्त्रे कुत्राचिदप्यस्य लक्षणं कृतम्। न चापि विलोमो नाम कश्चित्काव्यालंकारोऽपि विहित आलंकारिकैः। विदग्धमुखमण्डनसदृशेचित्रबन्धविवेचनपरेग्रन्थे प्रतिलोमयमक सर्वतोभद्रादिबन्धानां लक्षणान्युपलभ्यन्ते, न तु विलोमकाव्यस्य। कारणं त्वत्रेदृशकाव्यस्य विरलतैव स्यात्। अतोऽत्रास्माभिरेव विलोमकाव्यलक्षणकथने प्रयत्यते-

यत्र पद्यं तदर्धं वा पादो वाऽपि भवेत्क्षमः।<br>विलोमेऽप्यर्थनिष्पतौ विलोमं काव्यमुच्यते॥ इति ॥

अर्थात् विलोमकाव्ये वामतोऽक्षरपठने यथैवार्थानिष्पत्तिर्भवति तथैव दक्षिणतोऽक्षरपठनेऽपि। श्लेषादपि नितरां दुष्करा खल्वीदृशी रचना। परं संस्कृतकाव्यकारैरत्रापि यशो लब्धम्। मन्ये संस्कृतभाषाया एवायमनन्य साधारणो विशेषः। न खलु जगतीतलेऽन्यस्यां कस्यांचन भाषायामीदृशी रचना शक्यसंभवा

भवेत्।

अथ क्रमप्राप्तं विलोमकाव्यस्योदाहरणमप्युच्यते-

तथा हि भारविः किरातार्जुनीये पञ्चदशे सर्गे

निशितासिरतोऽभीको न्येजतेऽमरणा रुचा।
सारतो न विरोधी नः स्वाभासो भरवानुत॥ २२ ॥

अस्य विलोमः - तनुवारभसो भास्वानधीरोऽविनतोरसा।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि॥ २३ ॥

एतौ द्वाविंशत्रयोविंशौ श्लोकौ परस्परविलोमावपि, प्रकरणार्थ- वाचिनौ। किरातार्जुनीय ईदृश्यर्थतो विलोम रचनाऽत्रैव केवलं दृश्यते। शाब्दी विलोमरचना त्वन्यत्रापि क्वचिद् दृष्टि पथमायाति। तथा ह्यस्मिन्नेव सर्गे विंशतितमः श्लोकः,

ननु हो मथना राघो घोरा नाथमहोनु न।
तयदातवदाभीमा माभीदा बत दायत॥ २० ॥

वामतः पाठे दक्षिणतः पाठे वा समानोऽत्राक्षरविन्यासः। तेन च नास्त्यत्रार्थभेदः। पञ्चविंशे तु श्लोके प्रतिपादं विलोमपाठे समानोऽक्षरविन्यासः।

देवाकानिनि कावादे वाहिकास्वस्वकाहिवा।
काकारेभभरे काका निस्वभव्यव्यभस्वनि॥ २५ ॥

अत्र च सर्वतोभद्रो नामाधिकश्चित्रबन्धः। एवमेतावदेव भारविकृतौ विलोमकाव्यमुपलभ्यते। सर्वत्र च्छन्दोऽनुष्टुपेव। विलोमरचना सर्ववृत्तेषु नैव संभवति। यतो विलोमपाठे वृत्तहानिरपि न स्यादिऽत्यपेक्ष्यते।

भारविमनुसरता माघेनापि स्वकीयशिशुपालवधमहाकाव्यस्यैकोनविंशतितमे सर्गे चित्रबन्धरचना कृता। तत्र विलोमकाव्यप्रकारा अपि विद्यन्त एव। तथा ह्यार्थी विलोमरचना प्रस्तूयते त्रयस्त्रिंशचतुस्त्रिंश श्लोकयोः-

वाहनाजनि मानासे साराजावनमा ततः।
मत्त सारगराजेभे भारीहावज्जवध्वनि॥ ३३ ॥

अस्य विलोमः - निध्वज्जवहारीभा भेजे रागरसत्तमः।
ततमानवजरासा सेना मानिजनाहवा॥ ३४ ॥

अत्रापि प्रकरणवाचिनावेवेमौ परस्परविलोमौ श्लोकौ। अस्मिन्नेव सर्गे नवतितमे श्लोके विलोमपाठेऽक्षरविन्यासभेदेऽपि त एव शब्दाः स एव चार्थः।

विदितं दिवि केऽनीके तं यातं निजिताजिनि।
विगदं गवि रोद्धारो योद्धा यो नतिमेति नः॥ ९० ॥ इति।

किरातार्जुनीयवत् शिशुपालवधेऽपि शाब्दी विलोमरचना विद्यत एव।

नैषधादिष्वन्येषु महाकाव्येषु सुभाषितसंग्रहादिष्वपि च यत्र तत्र विलोमकाव्यं दृष्टिपथमायाति। किं तु तदुपेक्ष्य विलोमाश्रयेणोभयार्थवाचि संपूर्णं काव्यमेव तावत्पश्यामः। ईदृशी महाप्रयाससाध्याऽद्भुता कविता प्रथमं व्यरचि दैवज्ञपण्डित सूर्येणेसवीये षोडशे शतके। रामकृष्णविलोमकाव्याख्येयं रचना सममेव रामचरितं कृष्णचरितं च स्तौति विलोमाश्रयेण। नात्र संशीतिलेशोऽपि यदिन्द्रवज्रारथोद्धता-शालिनीत्यादि विविधवृत्तेष्वीदृशीं रचनां विदधता कविना प्रकटीकृतात्मनः काप्यद्भुता चित्रकाव्यकुशलता। न चात्र चित्रं यदीदृशे चित्रकाव्येऽन्येषां काव्यगुणानामन्वेषणं व्यर्थं भवति। अस्मिन् काव्ये प्रतिपङ्क्ति अनुलोमविलोमपाठाभ्यां रामकृष्णयोरुभयोः स्तुतिर्दर्शिता कविना।

अनुलोमेन - तं भूसुतामुक्तिमुदारहासं वन्दे यतो भव्यभवं दयाश्रीः।
विलोमेन - श्रीयादवं भव्यभतोयदेवं संहारदामुक्तिमुतासुभूतम्॥

अर्थोऽपि संक्षेपेण-

भूसुतायाः सीताया मुक्तिर्मोचनं यस्मात्तं भूसुतामुक्तिम्, उदारहासं, भव्यः पवित्रो भवोऽवतारो यस्य तं भव्यभवम्, पुनश्च यतो दया श्रीर्बभूव तं राघवं वन्दे- इत्यनुलोमेन रामपक्षे।

भव्यभतोयदेवं- भव्या भा दीप्तिर्यस्यासौ सूर्यस्तथा तोयशब्देन चन्द्रो जलात्मकत्वात् तयोर्द्योतनाद्देवः तम्, तथा संहारदामुक्तिम् संहारोऽनर्थस्तं ददातीति तथाविधा पूतना तस्या मुक्तिर्यस्मात्तम् तथा चोत प्रत्युत असुभूतं सर्वत्र प्राणरूपेणावस्थितं वन्दे इत्यध्याहारः। इति विलोमेन कृष्णपक्षे।

किंत्वेषापि सीमोल्लंघिता खिस्तीयसप्तदशशतके दीर्घतरं यादवराघवीयं विलोमकाव्यं विरचयता वेङ्कटाध्वरिणा। बह्वायाससंसाध्यत्वादी- दृशानि विलोमकाव्यानि विरलतराण्येव। तदपेक्षया श्लेषाश्रयेणानेकार्थकथनस्यापि सुगमत्वात्तादृशानि काव्यानि शतश उपलभ्यन्ते। द्वित्राण्येव तु संपूर्णविलोम-काव्यानि।

# प्राचीनृत्यनाट्यमाधुनिकनृत्यनाट्यञ्च

असौ 'सत्यं शिवं सुन्दरम्' इति त्रितये प्रतिफलितावलोक्यते। अस्या आनन्दमयचित्सत्तायाः सदनुभूतिरेव रसः। श्रुतिः संवदति 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति।' रसस्य अर्थात् आनन्दसन्दोहस्य उपलब्धिः। अनुभूतिः एवम् अभिव्यक्तिः मानवस्य नैसर्गिको धर्मः। एषा नैसर्गिकी मूलप्रवृत्तिरेव निखिलललितकलानामितिहासे विकासे च विद्यते।

जीवशास्त्रिभिः मनः शास्त्रिभिश्च मानवस्वभावे अनुकरण प्रवृत्तिश्चेतनायाः विकासस्य प्रारम्भिकक्षणेषु अपि प्रतिपादिता तथा अस्या एकमात्रं लक्ष्यम् आनन्दोपलब्धिरेव निगदिता यतो हि अनुकृत्या, उपलब्ध्या, अनुभूत्या, अभिव्यक्त्या च मनस्तुष्टिः आत्मनः निष्पद्यते। लौकिकदृष्ट्या अयमेव आनन्दोपलब्धेश्चरमसीमा।

खीष्टस्य दशमशताब्द्यां नाट्यकलाकामिनीकान्तेन धनञ्जयेन नृत्त-नृत्यनाट्यानां सत्ता तद्गतविशेषताभिधानपुरस्सरं पृथक्-पृथक् सभेदं प्रस्ताविता तथा रूपकोपरूपके च 'रसाश्रयं नाट्यम्, भावाश्रयं नृत्यम्' इति अभिधानेन पृथक् पृथक् निर्धारिते धनञ्जयस्य एषा धारणासमस्तमध्ययुगीननाट्यशास्त्रिषु प्रतिबिम्बिता दृश्यते।

नाट्यनृत्यनृत्तशब्दानां मूलस्वरूपविकासः अर्थविकासश्च यदानुसन्धाननिक-षोपलपट्टिकासु समारोपितौ तदा ज्ञायते, यत् नृत् धातोरेव प्राकृतं रूपम् 'नट' इति। वेबर मैक्डानल ह्विटनी प्रभृतिभिः विद्वद्भिरपि एवमेवाभिहितम्। साहित्ये च द्वयोरपि धात्वोः एकस्मिन् एव अर्थे अभिनिवेशः बहुधा दृश्यते। यथा 'नाटकं ननृतुः' इति हरिवंशे, 'छलिकं (नृत्यम्) नाम नाट्यम्' तथा 'यथा रसम् अभिनयति (नृत्यम्)' इति मालविकाग्निमित्रे लभ्यते स्पष्टमिदं यत् वेदविदितो प्राचीनमूलो नृत् धातुः नृन्नाट्याभिनय रसादीनाम् अर्थ विशेषं वहति स्म। आचार्यः कोहलः कथयति 'नाट्यं द्विविधं मार्गनाट्यम् देशीनृत्तम् च'। नाट्यपयोधिपारगाः अभिनवगुप्तः अभिभाषते 'तस्मात् नृत्तं नाट्यात् अभिन्नम्, तत् लक्षणोपेतत्व

नाट्यदर्पणकारस्य रामचन्द्रस्य गुणचन्द्रस्यापि मतमस्ति यत् नाट्यनृत्ययोः न कोऽपि अर्थात्मको भेदः। अतएव सिद्धमिदं यत् नाट्यात् नृत्यात् च तुल्यमेव रसचर्वणा रसात्मकता च निष्पद्यते। भावप्रकाशनकारेण शारदातनयेन अतएव उपरूपकाणाम् रसात्मकता स्पष्टं प्रतिपादितैव। ये केचन विद्वांसः कथयन्ति यत् वाक्यार्थाभिनयरूपं नाट्यं रसात्मकं तथा पदार्थाभिनयरूपं नृत्यं भावात्मकं भवति इति तत् नोचितम्। यतो हि यथा पदार्थवाक्यार्थयोः अविनाभावसम्बन्धः तथैव रसभावयोरपि। अतः न तयोर्भेदः अपितु अभेद एव। पदार्थ- परिणतिरेववाक्यार्थःतथा भावपरिणतिरेव रसः इति। तथापि स्थूलदृष्ट्या नाट्यनृत्ययोः कतिपयभेदकतत्त्वान्यपि स्पष्टानि भासन्ते। यथा नाट्येषु- शास्त्रीयतत्त्वानां बाहुल्यम् अवलोक्यते, किन्तु नृत्येषु लोकतत्त्वानाम्। नाट्येषु पुरुषपात्राणाम्, भारतीवृत्तेः, संस्कृतभाषायाः, संवादवर्णनानां वाचिकाभिनयाञ्च बाहुल्यं विद्यते, किन्तु नृत्येषु स्त्रीपात्राणाम्, शृङ्गारप्रधानकैशिकीवृत्तेः, प्राकृतभाषाणाम्, नृत्यवाद्यगीतानाम् आङ्गिकाभिनयानाम् च बाहुल्यं वर्तते। वस्तुतः नाट्यकला शिक्षितसंभ्रान्तवर्ग विकसिता तथा नृत्यकला लोकसामान्यमध्यफलिता विलोक्यते।

नृत्यनिर्माणकले मानवसर्गात् प्राक्कालिके इत्यत्र न सन्देहः। भारतीय-सुरभारतीसेवकैः सृष्टिसंहृत्योः नृत्यसत्तासमीक्षिता। भारतीयनृत्यं प्राग् वैदिकम् विद्यते, किन्तु न नाट्यम्। सिन्धुसभ्यतावशेषेषु नर्तक्याः, पशुपतिनटराजस्य, मातृदेव्याः उमायाश्च प्राप्तमुद्राः मूर्तयश्च अत्र प्रमाणानि। कतिपयविद्वान्सः कथयन्ति यत् भारतीयनृत्यकला द्राविडम् इति। नाट्यवेदेऽपि महर्षिणा भरतेन जनसाधारणे विकसितानां लोकनृत्यनाट्यानाम् कीर्तनप्रसङ्गेन निगदितम् ''एवमेते मया प्रोक्तानाट्ये चाभिनयाक्रमात्। अन्ये तु लौकिका एते लोकाद् ग्राह्याः सदाबुधैः। लोकोवेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्। लोकसिद्धं भवेत् सिद्धं नाट्यं लोकात्मकं तथा।'' डा० मनमोहनघोषेण नृत्यनाट्यानामतिप्राचीनता पुरातत्त्वप्रमाणानुरोधेन प्रतिपादिता। यथा- विन्सेण्टस्मिथमहोदयः कथयति यत् जोगीमाराबाधपाषाणगह्वरगेहयोः चित्रेषु उल्लिखितानि हल्लीसक नृत्यनाट्यचित्राणि स्पष्टानि शोभन्ते। सर्वप्राचीन- नाटककारभासस्य बालचरिते हल्लीसकनृत्यनाट्यस्य विशदोल्लेखो वर्तते। भरहुतपाषाणफलकेषु सट्टकनृत्यनाट्यस्य दृश्यम् अभूतपूर्वमेव।

अतएव जर्मनमहामनीषी विण्टरनित्ज महोदयोऽभिदधाति 'यत् प्राचीनलोकनृत्यनाट्यान्येव संस्कृतनाट्यजनकानि' इति।

संस्कृतनृत्यनाट्यानां गणनेयम्- भाण, भाणी, भाणिका, डोम्बिका, रासक, हल्लीसक, सट्टक, प्रेङ्क्षण, उल्लोप्य, शिल्पक, षिद्गक, नर्तनक, प्रस्थानक, काव्यगोष्ठी, कल्पवल्ली, श्रीगदित, त्रोटक, नाटिकेत्यादीनि उपरूपकाणि। एषां विकासेतिहासः ताण्डवनृत्यात् लास्यनृत्यात् तथा सट्टक प्राकृतनृत्यनाटकात् प्रभवति।

वस्तुतः नृत्यस्य मूलोद्देश्यं मनोरञ्जनम्। विशिष्टकारणसम्पत्त्या उल्लसितेन मानवमनोमयूरेण सहर्षं स्वदशायाः नैसर्गिकाभिव्यक्तिहैतुक्याः याः आङ्गिकवाचिक सात्त्विक मुद्राः प्रचेष्टिताः ताः एव ललितकलानामितिहासे नैसर्गिकीम् नृत्यसंज्ञां साम्प्राप्ताः। मनः प्रवृत्तिः शरीरं गतिशीलं करोति। मानसोल्लासः एव शरीरोल्लास स्वरूपेण बहिरभिव्यज्यते। इयमेवोल्लासाभिव्यक्तिः शनैः शनैः नृत्त, नृत्यनाट्यकलासु विकसति। एवं लोकाः पर्वेषु विशेषोत्सवेषु धार्मिकसांस्कृतिक-समारोहेषु च देशकाललोकानुवर्तिनम् क्वचित् शास्त्रीयं नाट्यधर्मिणं मार्गेति संज्ञकं क्वचित् स्वतन्त्रं लोकधर्मिणम् देशीति संज्ञिकम्,नृत्यावतारं पल्लवितं विलोकयन्ति।

प्रायः शिक्षितसंस्कृतवर्गः सदैव साधारणजनसमूहात् आत्मानं पृथगेव पालयति। तस्य साहित्यं कलाश्च लोकसाहित्यात् कलायाश्च पृथगेव विकसन्त्यः दृश्यन्ते। प्राचीनकालादेव लोककलाः नित्यनूतनशीतलमन्दलोकमलयस- मीरणलहरीभिः क्रीडाः कुर्वत्यः विकसन्त्यः दृष्टिपथमायान्ति। किन्तु कालस्य चक्रनेमिक्रमचङ्क्रमणेन संस्कृतोपरूपकाणि अपि दैवदुर्विपाकात् भारते संस्कृतभाषाह्रासकारणात् क्रमशः विभिन्नलोकनृत्यनाट्यरूपाणि धृत्वा लीलाजात्रादिपरिवेषं च कृत्वा ऐश्वर्यविलास- परिपूर्णेषु राजकीयसुरागरंगमञ्चेषु तथा सामान्यजनसेवितधरणीतलमण्डपेषु नभस्तलेषु सविलासं प्रस्तूयन्ते स्म। अस्याः नूतननृत्यनाट्यकलायाः कत्थक मणिपुरीभरतनाट्यंकथाकलीप्रभृतिरूपाणि मध्योत्तरपूर्वोत्तर- दक्षिणपूर्वदक्षिणपश्चिमप्रदेशेषु विकसितानि दरीदृश्यन्ते।

लिङ्गपुराणे-पेलवि-बहुरूपक- छुरित-यौवत-ताण्डवलास्यनृत्यानां विशदं

वर्णनम् वर्तते। प्रायः कत्थककथाकलिभरतनाट्यंमणिपुरीनृत्यानि नाट्यशास्त्रापेक्षया लिङ्गपुराणाधारमधिकम् अधिगृह्णन्ति। वस्तुतः आधुनिकनृत्यनाट्यानाम् रचनाऽऽधारः पौराणिकः किन्तु शिल्पं पाश्चात्यमस्ति। पौराणिकचित्राणि पाश्चात्यरागरञ्जितानीव प्रतीयन्ते। तथापि भरतनाट्यम् भरतवर्णितानां मुद्राणाम् अङ्गहाराणाम् च प्रयोगमवश्यमेव विदधाति, तथैव कत्थकमपि रागाणाम् तालानाम् च प्राचीनसुदृढाधारमद्यापि न त्यजति। पदाघातदृष्ट्याद्वितीयमिदं नृत्यं प्राचीननृत्तादेव विलसितं विद्यते। महात्मना हरिदासेन नवाबवाजिदअलीशाहेन चेदं कृतार्थीकृतम् इति विदितमेव विदुषाम्। सर्वाधिकमूकनाट्यं जगति, साङ्केतिकसमृद्धनृत्यभाषामयं, मुद्राभिः रसभावाभिव्यञ्जकं, कथकलीनृत्यनाट्यं केन न कर्णगोचरी कृतम्। शान्तिनिकेतनस्य सुरम्यवसुधायां विकसिता कोमलकान्तमणिपुरीनृत्यकला पार्वती- परमेश्वरयोः प्रणयलीला इव भारतभुवं पुनाति। मणिपुरीरासलीला आत्मपरमात्मने चिरन्तननृत्यस्य प्रतीकम्। एतेषु नृत्यनाट्येषु ताल-लय-गात्रविक्षेपभावाभिनयानां प्राधान्यं विज्ञापयत्येषां संस्कृतोपरूपवंशजत्वम्। नाट्यशास्त्रीयमुद्राः, अङ्गहाराः करणानि च सर्वत्र स्वीकृतसाधनसम्पत्तयः सन्ति तथा प्राचीन भाणोपरूकस्य बहुविधरूपाणि अद्य लोक भाँडस्वांगप्रभृतिलोकनृत्यनाट्येषु द्रष्टव्यानि येषु अतिप्राचीनपरम्पराः सुरक्षिताः सन्ति। अनेन समालोचनेन ज्ञायते यत् संस्कृतोपरूपकह्रासससमानान्तरमेव अनेकविधनृत्यनाट्यपरम्पराः प्रसृताः विकसिता एवम् इदानीं विश्वविश्रुततां गताः॥

# बह्वाश्चर्या हि मेदिनी

पूर्वमेतस्याः सूक्तेरर्थः स्पष्टीक्रियते बहूनि आश्चर्याणि विस्मयोत्पादकानि द्रव्यगुणक्रियादीनि यस्यां सा बह्वाश्चर्या। मेदिनी शब्दः पृथ्वीभूतलादि पर्यायोऽस्ति। स च लक्षणया मेदिनीस्थितद्रव्यादिपदार्थबोधकः। यथा मंचेष क्रोश क्रियाया असम्भवान्मुख्यार्थबाधे सति मंचशब्दो लक्षणया मंचस्थितपुरुषबोधकस्तथैव मेदिनी शब्दोऽपि लक्षणाशक्त्या मेदिनीस्थ स्थावरजंगमात्मकजीवादिबोधकः। ते च जीवा अण्डजपिण्डजस्वेदजोद्भिजा-दयश्चतुर्विधा भवन्ति। नद्यः समुद्रा गिरयश्चापि मेदिन्यां विराजन्ते। तत्र केषुचित् प्रवर्तमाना क्रिया आश्चर्यकरी। केषुचित्तदीयो गुणः। कुत्रचिद् व्यक्तिरेवाश्चर्यमातनोति।

एवं सर्वमिदं जगद् विविधैःक्रियाद्रव्यैः समन्वितं इन्द्रजाल मिवारिवलाश्चर्यमयं लक्ष्यमाणमस्ति। यथा ऐन्द्रजालिकेन दर्शितानि कार्याणि बह्वाश्चर्यमातन्वन्ति। तथैव विधात्रा सृष्टमिदं जगत् सकलाश्चर्यपूर्णमस्ति। अतएवायं संसारः सर्वेभ्य इन्द्रजालेभ्योऽधिकाश्चर्यकरः प्रोक्तोऽस्ति भर्तृहरिणा तद्यथा संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् इति। प्राणिषु लघुकायाः पिपीलिकाद्याः महाकाया विचित्राकृतयो मदोन्मत्ता गजेन्द्रा मत्तेमकुंभ- दलनक्षमाः केसरिणः, विचित्ररूपाबराहाः मृगा गवयाश्च दृष्टिपथं गताः विस्मयमावहन्ति।

अण्डजानां मध्ये हंसानां धावल्यं शुकानां मनोहरं हारित्यं मयूराणां चित्ताकर्षकं चित्रत्त्वं केषां जनानां विस्मयाय न भवन्ति। तादृशो हारित्यादि गुणः प्रयत्नशतेन नापि नोत्पादयितुं शक्यते मानवैः। अतएवैतैस्तस्थैर्गुणैरावर्जितहृदयः कश्चित् कोविदो जगद् विधातारं स्मरति वृत्तिप्रदानाय - येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः। मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति। येन विधात्रा इदं वैचित्र्यं कृतं स वृत्तिमपि कर्तुं प्रभुः। गुणवदेव क्रियाऽपि महाश्चर्यं करोति मानवानां मानसेषु। यथा नारिकेलफलेऽन्तर्जलागमः। न कोपि नारिकेलफलं जलेन पूरयति किन्तु तन्महत्फलं सुमधुरेण जलेन परिपूर्णं दृश्यते। इक्षुकाण्डेषु मधुररसोद्भवः आश्चर्यकर

एवास्ति। कपित्थफलं गजेन भुक्तमुक्तंसन्निःसारं भवति पूर्ववत् अभग्नमविक्षतं च तिष्ठति। फले भग्ने छिन्ने वा सति तदन्तः स्थित सारांशोबहिनिर्गतो भवति नान्यथा। इत्थं गजभुक्तमुक्तस्य कपित्थस्यान्तःसार निर्गमः अभग्नता च सर्वानिवाश्चर्यचकितान्विधत्ते। बहुषु आश्चर्येषु प्राणिनां जिजीविषाऽपि महान्तमाश्चर्यातिशयं कुरुते। सर्वाणि भूतानि अहरहः कालकवलितानि जायन्ते, इति पश्यन्तोऽपि सर्वे यस्मिन्कस्मिंश्चिद्दिने पंचत्वं गमिष्यन्तीति। शेषा जीवा विजानन्तोऽपि जीवनेच्छां न मुञ्चन्तीतिमहच्चित्रम्। पुरा काले जलानयनाय प्रेषितान् चिरादपि न प्रत्यागतान् भ्रातॄन् अन्विष्यन्धर्मराजो युधिष्ठिरः कस्यचित्सरस्तीरमाससाद। तत्र स्थितः कश्चिद् यक्षः जलं पातुं प्रवृत्तं युधिष्ठरं जलपानान्निवारयन् प्रश्नचतुष्टयं प्रपच्छ तत्र प्रश्नेषु एकतमः प्रश्नोऽयमप्यासीत् "किमाश्चर्यम् इति।"

तेषां प्रश्नानां क्रमेण उत्तरं प्रयच्छन् किमाश्चर्यमस्योत्तरमब्रवीद् धर्मराजः

अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्।<br>
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम्॥

इति युधिष्ठिरेणोक्तं युक्तमुत्तरं प्राप्य परितुष्टो यक्षः जलं पातुमादिदेश। तद्भ्रातॄंश्च मुमोच। किं बहुना उच्चाच्चतमा दुरारोहा महागिरयः निम्नान्निम्नतमा अगाधा अनन्ताः सागराश्च स्वौन्नत्येन अगाधतया च अनल्पाश्चर्यकराः सन्ति मेदिन्याम्।

अन्यच्च वाटिकादौ एकलस्थाने स्थिताः अपि फलिनो नानाविधावृक्षाः विविधरसापुतैर्नानारूपैः फलैर्मण्डिताः विराजन्ते। सर्वमेतद् वैचित्र्यप्रकृतिकृतं विस्मयमातनोत्येव मेदिन्याम्।

साम्प्रतं मानवनिर्मितेषु कतिपयेषु वैज्ञानिकाविष्कारेषु दृष्टिर्दीयताम्। ते चाविष्काराः परमाश्चर्यकराः सन्तीति नात्रवैमत्यम् कस्यचित् - यथा वाष्पचालित-यंत्राणि, सूत्रवेष्टनपटवयनयन्त्राणि, विद्युच्छक्तिः अश्वादिभिर्विना चालितानि यानानि, वायुयानतारयन्त्रदूरभाषणयंत्राणि, चलन्ति सम्भाषमाणानि गायन्ति च चित्राणि, आकाशवाणी, दूरदर्शनम्, परमाणुशक्तिप्रयोगः, ग्रहेषु उपग्रहेषु च

गमनादिकम् अमेरिका-ध्रुवाद्यन्वेषणप्रभृतयः परमाद्भुताः मुख्यतमा आविष्काराः सन्ति। सर्वमेतद् विविधम् आविष्कारजातं जनयति परमाश्चर्यं दर्शकानाम्।

यद्यपि गच्छता कालेन सर्वमाश्चर्यं भूयोभूयो दृश्यमानं श्रूयमाणं च सत् सर्वेषां कृते सामान्यं भवति। तथापि अदृष्टपूर्वम् अश्रुतपूर्वं च सर्वमेव वस्तुजातं श्रुतंदृष्टं वा आश्चर्यं जनयत्येव। किंचित्कालात्पूर्वं वाल्मीकीये रामायणे वर्णितस्य पुष्पकविमानस्य नाम श्रावं श्रावं जनाः परमविस्मयामापन्ना भवन्ति स्म। केचित्तु तस्यास्तित्वं कल्पनामात्रमेव मन्यन्ते स्म। साम्प्रतं गगने उड्डीयमाना विमानावली दर्शकानां मनःस्सु विस्मयमादधती पुष्पकविमानस्यास्तित्वे विश्वासं दृढयति। यन्मानवा अपि खगा इव गगने उड्डीयमाना दृग्गोचरीभूताः भवन्ति। अतः परं विद्युज्जनितानि आश्चर्याणि पश्यत - साम्प्रतं भारतवर्षे एकमपि मन्महन्नगरं न विद्यते यत्र विद्युदागमो न भवेत्। गेहे गेहे विद्युद्दीपैः प्रकाश उपनीयते। विद्युद् यन्त्रैः गीतानि समाचाराश्च श्रूयन्ते। विद्युद्व्यजनैः तापनिवारणं अन्नपाकः, वस्त्रसंकोचनिवारणं, एवं बहुविधानि कर्माणि प्रकटमप्रकटं वा विद्युद्बलेन विधीयन्ते। आस्तां तावन्नगरचर्चा, संप्रति विद्युत्प्रसारेण ग्रामाणामपि स्वरूप-परिवर्तनं विहितम्। छवीनामंकनं कैमरा नाम यंत्रेण विधीयते। एतस्याविष्कर्ता लियो नार्दो द विन्सी महानाविश्कारको बभूव तेन स्वकार्ये महता कालेन सततं प्रयतमानेन च साफल्यमधिगतम्। कैमरायंत्रनिर्माणं तस्य सूक्ष्मबुद्धेः परिचायकम् तत्र चित्राणां स्पष्टीकरणं लघुतो महत्करणं चेत्यादि विकासोऽपि क्रमेण जातः।

चलच्चित्राणां परस्परं संलापाः, तेषां मनोहारिण्य आकृतयः छविगृहे दर्शकाणां मनांसि रंजयन्ति। तदाविष्काराद् बहुकालपूर्वं मैजिक लालटेन, नाम्नो यंत्रस्याविष्कारोऽभूत्। तत्र क्रमेण अमेरिका वास्तव्येन विख्यातेन आविष्कर्त्रा थामस अल्वाऐडिसिन महाशयेन विकासो विहितः। चलच्चित्राविष्कारोऽपि आश्चर्येष्वन्यतमं विद्यते।

सर्वेष्वाश्चर्येषु परमाणुशक्तिरेका परमाश्चर्यकरी। प्राचीनकाले बहवो वैज्ञानिकाः परमाणुसत्तामात्रं मेनिरे। यस्य कस्यापि वस्तुनो लघुतमोंऽशः परमाणुरुच्यते। बहुनि अन्वेषणेकृते वैज्ञानिकाः सर्वेषां वस्तूनां मूलतत्त्वानि सन्तीति निचिक्युः।

रेडियमपदार्थाविष्कारः विश्वं विस्मयसागरे निमज्जयति। यस्मान्निर्गता विचित्रकिरणा अदृश्यमाना एव पदार्थेषु पारगामिनोभवन्ति। परमाणुस्थानां इलैक्ट्रोनानां गतिः बहुतीव्रा भवति तेषां गमनाय रिक्तं स्थानं दुर्लभम् भवति। परमाणुबम संज्ञकास्त्रनिर्माणं परमाणुभिरेव विहितम्। यदेकमप्यस्त्रं लक्षं जनान् हन्तुं विशालं नगरं च क्षणेन विध्वंसयितुं शक्नोति। अगाधे सागरे महापाता अपि परमाणु रूपेणेन्धनेन परिचाल्यन्ते। संप्रति वाष्पशक्तिचलितानि यंत्राण्यपि अचिरेणैव कालेन परमाणुशक्त्या चालितानिभवेयुरित्याशास्यते। कृषिकार्ये, चिकित्साकार्ये उद्योगशालासु च परमाणुशक्तिरूपयोगिनी भविष्यति सम्भाव्यते।

अमेरिकादेशान्वेषणं कोलम्बसनाम्ना साहसिकेन पुरुषेण कृतम्। उत्तरीय दक्षिण ध्रुवान्वेषणं महद्दुष्करं कार्यं केषां विस्मयाय न भवतीति। साम्प्रतम् अमेरिका-वास्तव्याः रूसवास्तव्याश्च वैज्ञानिकाःराकेटयानेन चन्द्रलोकादि यात्रां कुर्वाणाः समस्तं ससारं महदाश्चर्यचकितं व्यदधुः। अग्रे च बहूनि अप्रकटानि आश्चर्याणि अचिरेण न दृष्टिपथमायास्यन्तीति सुभृशं विश्वसिमः। अतः साध्विदमुच्यते बह्वाश्चर्या हि मेदिनी।

# के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः

सूक्तिरियं यस्य मुखपद्माद् विनि:सृतास्ति स विश्वविख्यातः संस्कृतसाहित्याकाशभास्करो महाकविः कालदासोऽस्ति। तस्यानेकासु कृतिषु एकतमा कृतिर्मेघदूतम् नाम विद्यते, यत्खण्डकाव्यं गीतिकाव्यं वोच्यते। तत्रैव गीतिकाव्ये एतत्सूक्तिरत्नं यस्मिन्पद्ये विद्यते तत्सकलं प्रसंगप्रदर्शनायोच्यते-

ये संरंभोत्पतनरभसाः स्वांगभंगाय तस्मिन्
मुक्तध्वानं सपदि शरभा लंघयेयुर्भवन्तम्।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्,
के वा न स्युः परिभवपदं निष्फलारंभयत्नाः॥

राजराजेन कुबेरेण अलकापुर्याः निर्वासितो यक्षः रामगिरौ वसन् अष्टौ मासान् यापयित्वा आषाढमासे मेघेन प्रियायै सन्देशं प्रापयिष्यन् मेघं मार्गमुपदिश्य ब्रबीति यत् तत्र हिमालये गतं भवन्तं मेघं शरभा अष्टापदमृगविशेषाः उत्पत्योत्पत्य लंघयेयुश्चेत्तान् कारकाभिस्ताडयेद् भवान्। यतस्तेषां भवत्कर्मकोल्लंघनप्रयासे शरीरश्रमातिरिक्तं न किमपि फलं दृश्यते। तेन ते त्वत्तः परिभवप्राप्तियोग्या एव सन्तीत्यर्थः।

सूक्तिरियं यथा शरभाणां विषये चरितार्था तथैव मानवमात्रे व्यापकरूपेण सत्यास्ति। निष्फलारम्भो न कस्यापि कस्मैचिद् गुणाय कल्पते। प्रत्युत तिरस्काराय दुर्भरासे, लाघवाय च संजायते। अत एव विद्वांसो निष्फलकर्माचरणं प्रतिषेधयन्ति, शास्त्राण्यपि च साग्रहं तत्कर्म परिवर्जयन्ति, यथा 'न कुर्यान्निष्फलं कर्म, इति मनुरप्याह न कुर्वीत वृथा चेष्टाम् इति। येन विहितेन कर्मणा शरीरश्रममन्तरा कोऽपि नान्यो लाभो जायते किन्तु हानिरेवानुभूयते तन्निष्फलं कर्म। यथा जलस्य ताडनरूपं कर्म सर्वथा निष्फलं तस्य लगुडेन अन्येन वा केनापि साधनेन ताडने किमपि फलं ताडयितुर्भवति। श्रम एव हि केवलं दृश्यते। आकाशे कर्दमोत्क्षेपणं न कस्मैचिद् फलाय सम्पद्यते किंच आत्मनः कष्टायैव। तथा चोक्तं केनापि विपरिचता पंकोऽपि नभसि क्षिप्तः क्षेप्तः पतति मूर्धनि, अतो प्रयोजनमपेक्ष्यैव कार्यमारभन्ते मनीषिणः।

अतः सर्वे बुधाःस्वः ग्रन्थारम्भे स्व काव्यारंभे च अनुबन्धचतुष्टयनिरूपण प्रस्तावेन तन्निर्माणप्रयोजनमपि बोधयन्ति अन्यथा तत्कृतग्रन्थस्यानादरात् निष्फलस्तत्र कृतः श्रमो भवेत् अतएव मम्मटाद्याचार्यैः काव्यरचनाप्रयोजनानि स्पष्टमुक्तानि- काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे,

अन्यच्च धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।<br>
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्।

इत्यादिफलोद्देश्येनैव काव्यकर्तृणां तदध्येतॄणां च तत्र प्रवृत्तिर्जायते। निष्फलं कर्म द्विधा भवति यथा कर्मणि क्रियमाणे तत्र किमपि फलमेव नास्ति कुतस्तस्यप्राप्तिः। तत्र फलस्यासत्त्वात्। अन्यच्च तत्र पारिप्सिते कर्मणि फलसत्वेऽपि तत्र अशक्त्यादिषु बाधकेषु च सत्सु फलावाप्तिर्न जायते। तेन कृतो यत्नो विफलतामेति। यथा महोच्चस्थानस्थितस्य पदार्थस्य लघुकायेन वामनेन जनेन वाहुना प्राप्तिर्दुःशकैव। साधनाभावे सतोऽपि फलस्य प्राप्तिरशक्यैव। तदपि कर्म उपहासास्पदमेव जायते। ईदृशमेवभयं कालिदासेन स्वारब्धे रघुवंशवर्णनप्रस्तावे प्रदर्शितम्

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।<br>
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥<br>
मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्।<br>
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥

यद्यपि कालिदासस्येयमुक्तिस्तस्य विनयनिरभिमानिता प्रकाशिकैवास्ति। अस्तु- यो वा को वा भवेत्सर्व एव निष्फलारंभयत्नः परिभूयते जनैः। अन्येषु समुचित साधनेषु देशः कालः मित्राद्याः सहायाः व्ययः लाभश्चेत्यादयः सन्ति अतएवोच्यते -

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ।<br>
को वाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः॥

सर्वमेतद्विचिन्त्य यतमानोऽवश्यं सिद्धिं समाजे सम्मानं च लभते। कृषीवलः कालं देशं च विचिन्त्य कृषिकर्मारभते वीजांकुरणयोग्यामेव भूमिं हलेन कर्षति समुचिते काले एव बीजं वपति, न तु ऊषरादिभूमौ बीजोप्तिं विधत्ते। सतण्डुला धाना एव अवहन्यन्ते। न तु तण्डुलहीनाः केवलास्तुषाः तथा कुर्वाणस्य शरीरक्लेशातिरिक्तो न कोपि लाभः। उपहसनीयश्च स भवति तदुक्तं तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावधातिनाम्। देशकृतं कालकृतं च बहुबलं भवति, निर्बलोऽपि कुत्रचिद् देशे सबलो भवति यथा नक्रः स्वस्थाने जलाशयादौ स्थितो महागजमपि पराजयते उच्यते च- नक्रः स्व स्थानमासाद्य गजेन्द्रमपि कर्षति। श्वा अपि स्वामिसदने स्थितो बलवान् भवति प्रभवति च बलवन्तमप्याक्रमितुम् तथा चोक्तं 'निजसदननिविष्टः श्वा न सिंहायते किम्।' अतः स्वाभीष्टसिद्धये स्वपरिभवपरिहाराय च देशकालादिकमवश्यं विचारणीयमेव। अन्यथा परिभवोदुर्निवार एव। निष्फलारम्भयत्ना न केवलं परिभवं प्राप्नुवन्ति प्रत्युत मृत्युमपि प्राप्नुवन्ति। अयमर्थः संस्कृतकथासाहित्ये पंचतंत्रादौ सविस्तरं कथाच्छलेन विवोधितोऽस्ति। उदाहरणार्थ - कीलोत्पाटि वानरकथा दिङ्मात्रमुच्यते। एकस्मिन्नगरे देवालयनिर्माणाय स्थपतयः तक्षकादयश्च कार्यरता अभूवन्। ते च मध्याह्ने स्वकार्याद्विरम्य भोजनाद्यर्थं क्वचिद् गताःतस्मिन्नेव काले तत्र कतिपये कपयः समायातास्तेषु केचित् तरुशाखासु केचित् तत्र स्थापितेषु दारुषु क्रीडितुमारब्धाः। तेष्वेकतमो वानरः अर्धस्फाटित काष्ठमध्ये निहितं कीलमेकं पाणिभ्यामुत्याटयितुमारेभे। तस्मिन्नुत्पाटिते कीलके वानरवृषणौ दारुमध्यगतौ पिष्टौ अभूताम् तेनासौ तत्क्षणमेव पंचत्वं गतः। अत उच्यते- अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छिति। स एव निधनं याति कीलोत्पाटीव वानरः। अतो निष्फलारंभो न विधेयः अन्यच्च सिंहनिर्मातारः केचन पण्डिताः सिंहं विधाय तेनैव ते भक्षिताः। अत उच्यते 'अविवेकः परमापदां पदम्' किमपि फलमनपेक्ष्यैव ते सिंहनिर्माणे प्रवृत्ताः।

# संस्कृतेः संवाहिका नदी गङ्गा

भारतीयसंस्कृतेः संवाहिकासु शक्तिषु नदीनां प्रमुखं स्थानं वर्तते। तास्वपि गंगायाः महत्त्वम् अप्रतिमम्। गंगायाः महत्त्वस्य समग्ररूपेण समाकलनं वाक्शक्तेः सीमभ्यो बहिर्भूतमेवेति प्रायः सर्वैः स्वीक्रियते। अस्माकं पूर्वपुरुषैः वैदिक ऋषिभिः यासां प्राकृतिकशक्तीनां स्तवनं ऋग्भिः कृतं, तासु सरितोऽपि प्रामुख्यं भजन्ते। इन्द्र- वरुण - कुवेर - रुद्र - वायु - अग्नि - सवितृप्रभृतयः प्राकृतिकशक्तयः यथा तैः दिव्यशक्तिसम्पन्ना समाकलिताः, तथैव सरितामपि दिव्यत्वं ऋषिभिः समग्ररूपेण समुद्गीतम्। वैदिक कालानन्तरं पौराणिककालपर्यन्तम् अस्माकं श्रद्धायाः स्रोतःस्वरूपाः सरितः पुराकथास्वपि संश्लिष्टाः संजाताः। परिणामस्वरूपं भारतीयजनजीवनस्य संग्रथने विकसने च प्राकृतिकशक्तीनां सर्वाधिकं योगदानं परिलक्ष्यते। पौराणिक आख्यानानां तथा महर्षिवाल्मीकि-विरचितरामायणसदृशग्रन्थमाध्यमेन वयमेतद्ज्ञातुं पारयामः यत् भगवत्याः गंगायाः अवतरणं भूलोके कथं कदा च संजातमिति। भगवता रामेण संपृष्टः ऋषिः विश्वामित्रः गंगाया उत्पत्तिविषये एवं कथयति-

शैलेन्द्रो हिमवान् राम धातूनामाकरो महान्।  
तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि॥  
या मेरुदुहिता राम तयोर्माता सुमध्यमा।  
नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया॥  
तस्या गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता।  
उमा नाम द्वितीयाभूत् कन्या तस्यैव राघव॥  
एतत्ते सर्वमाख्यातं यथा त्रिपथगामिनी।  
खं गता प्रथमं तात गतिं गतिमतां वर॥  
सैषा सुरनदी रम्या शैलेन्द्रतनया तदा।  
सुरलोकं समारूढा विपाषा जलवाहिनी॥

कालान्तरे षष्ठिसहस्रपुत्राणामुद्धारार्थं तपस्तप्त्वा सगरेण लोककल्याणकारिण्याः

गंगायाः भूलोकावतरणाय प्रजापतेः वरं लब्ध्वा पुनश्च पुनः घोरं तपस्तप्त्वा तेन भगवान् शंकरः प्रार्थित प्रथमं जटाजूटे गंगायाः वेगस्य सहनार्थं तदनन्तरं च जटाजूटाद् भूमौ गंगायाः प्रवाहार्थम् तद्यथा-

सगरः-गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम्।
स्वर्गं गच्छेयु रत्यन्तं सर्वे च प्रपितामहाः ॥

ब्रह्मा - गंगायाः पतनं राजन् पृथिवी न सहिष्यते।
तां वै धारयितुं राजन् नान्यं पश्यामि शूलिनः ॥

हरेण विसृष्टागंगा सप्तस्रोतस्सु प्रवाहिता तद्यथा -

विसर्ज ततो गंगा हरो बिन्दुसरः प्रति।
तस्यां विसृज्यमाणायां सप्त स्रोतांसि जज्ञिरे॥

कानि पुनस्तानि सप्तस्रोतांसि इत्यस्मिन् विषये वाल्मीकिरामायणाद् ज्ञायते।

ह्लादिनी पावनी चैव न नलिनी च तथैव च।
तिस्रः प्राचीं दिशं जग्मुःगङ्गाः शिवजलाः शुभाः॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी।
तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु दिशं शुभाः॥
सप्तमी चान्वगात् तासां भगीरथरथं तदा॥

गंगायाः जह्नुकन्यात्वमपि विश्रुतं वर्तते। तत्कथं संजातमिति विषये महर्षिर्वाल्मीकिरेवं कथयति-

यतो भगीरथो राजा ततो गङ्गा यशस्विनी।
जगाम सरितं श्रेष्ठं सर्वपापप्रणाशिनीम्।
ततो हि यजमानस्य जह्नोरद्भुतकर्मणः।
गङ्गा सम्प्लावयामास यज्ञवाटं महात्मनः।
तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव।
अपिवत्तु जलं सर्वं गङ्गायाः परमद्भुतम्॥
ततो देवा सगन्धर्वाः ऋषयश्च सुविस्मिताः।

इत्थं एतत् सुस्पष्टं संजायते यद् भगवती गङ्गा हिमवतः प्रसूताया देवगणसंरक्षितायाः तथा मानवकृततपश्चर्यायाःप्रतीकरूपेण स्वजन्मना एव भारतीय संस्कृतेः निर्मात्री एव संवाहिका अस्ति।

ज्येष्ठमासस्य शुल्कदशम्यां भूलोके समवतरिता भगवती भागीरथी स्वकीय वर्तमानमूलस्थानात् गोमुखात् गंगासागरपर्यन्तं सुविस्तृतस्य भूभागस्य प्राणदायिनीरूपेण जनजीवनमेव न, अपितु प्राणिजातं वनस्पतिवर्गं च परिपोषयति। अतः भारतमाता इव गङ्गामाता अपि सर्वेषां भारतीयानां पूज्या वर्तते।

भारतीयसमाजे पुण्यस्य, पापस्य सत्कर्मणाम् असत्कर्मणां वा निराकरणे तदर्थकालाक्रियाकलापेषु च गङ्गायाः सन्निधिः स्मरणं वा प्रायः सर्वैः दृष्यते, विशेषतश्च हिन्दूधर्मावलम्बिभिर्जनैः। गंगा दशपापहरा अस्तीति सुप्रसिद्धमेव।

यद्यपि पापानां परिहाराय नैके उपायाः प्रायश्चित्तविधानानि च निर्दिश्यन्ते शास्त्रकारैः सत्कर्माणि आत्मज्ञानादीनि च परिगणितानि 'पापनिवारणोपायेषु तत्त्वविद्भिः। तथापि पापनिवारणस्य सर्वसुलभः सरलतमश्चोपायोऽयमेवास्ति यद् गंगायां स्नानात् गंगाजलपानाच्च नरः पापेभ्यः मुच्यते। एवं प्रकारेण भारतीयानाम् एषा मान्यता अस्ति यद् गंगायाः संस्पर्शात् स्मरणाच्च जनः पापमुक्तः सञ्जायते। एवं च स्वकीयप्राकृतिकगुणानां प्रभावात् गंगाजलं रोगेभ्योऽपि जनान् रक्षयति। एतदेव कारणं यद् गंगा न केवलं स्रोतस्विनी रूपेण अपितु देवतायाः रूपेणाऽपि सुप्रसिद्धा वर्तते।

भारतीयानां जीवने एतादृशी कापि अन्या बुद्धमूला आस्था नास्ति, यादृशी गङ्गां प्रति दरीदृश्यते। पूजाप्रक्रियाणाम् उपासना पद्धनीनां च दृष्ट्या विभिन्नेषु वर्गेषु विभक्ते हिन्दूसमाजे गङ्गानाम्नी एका ईदृशी सामान्या श्रद्धेया धारणा अस्ति या समग्रं भारतं सांस्कृतिके सूत्रे सामाजिके च ऐक्ये भारत मातुः मृत्तिका गंगायाश्च जलम् एतद्द्वयं भारतीयजनजीवनस्य भारतीय संस्कृतेश्च आधारभूतं सम्बलमस्ति । गङ्गायाः सार्धद्विसहस्रकिलोमीटरमिते यात्रामार्गे देवप्रयागऋषीकेषहरिद्वार-गढ़मुक्तेश्वरप्रयागकाशीपटनाकलकत्ता प्रभृतिनगराणि गंगायाः पार्श्ववर्तित्वात् न केवलं तीर्थत्वं धारयन्ति अपितु भारतीय-सभ्यतायाः संस्कृतेश्च केन्द्रत्वेन अपि

तानि सुप्रसिद्धानि संजातानि। संक्षेपतः एतत् कथयितुं शक्यते यत् भारतीयसभ्यतायाः भारतीयसंस्कृतेश्च सूत्राणि गंगायास्तटेष्वेव प्रमुखतः संग्रथितान्यभूवन्।

प्राचीनकाले यातायातस्य साधनानि अत्यल्पान्यासन् नदीनां माध्यमेनैव अस्माकं पूर्वपुरुषैः यातायातस्य मार्गाः निर्धारिताः। नौकानां विकासः संभवतः सभ्यतायाः आरम्भिके युगे एव सञ्जातः। अतः एतत् सुष्पष्टं जायते यद् व्यापारस्य प्रक्रियायाः समारम्भे अर्थव्यवस्थायाः समाधाने च संस्कृते प्रादुर्भावे संवहने च नदीनां सर्वाधिकं महत्त्वम् आसीत्। अद्यापि न केवलं हिन्दूनाम् अपितु प्रायः नैकेषामन्येषांधर्माणाम् धारणा अस्ति यद् गङ्गाजलं नैकेषां रोगाणामुपचारे समर्थमस्ति। इतिहासादपि एतज्ज्ञायते यत् अकबरसदृशाः सिहष्णवः शासकाः स्वकीयभोजने पेये ज गंगाजलस्य सेवनं कुर्वन्ति स्म।

भारतीयसाहित्यमपि गङ्गायाः पावनतायाः संस्पर्शेण समृद्धमभवत्। वाल्मीकिव्यासकालिदासप्रभृतिभिः प्राचीनैरेव न अपितु अर्वाचीनैरपि साहित्य-प्रणेतृभिः गङ्गायाः महिमानं गीत्वा स्वीयाः लेखिन्यः पवित्रिताः। भगवती गंगा वस्तुतः अस्माकं संस्कृतेः मूर्तिमती संवाहिका अस्ति। पण्डितराजस्य जगन्नाथस्य शब्देषु वयमपि गंगां प्रति स्वीयां प्रार्थनाम् एवं प्रकारेण निवेदयितुं शक्नुमः यत्-

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा,
विलोलद्वानीरं तव जननि तीरं श्रितवताम्।
सुधातः स्वादीयः सलिलभरमातृप्ति पिबतां
जनानामानन्दः परिहसति निर्वाणपदवीम्॥

# कठोपनिषत्संदेशः

सर्वा एवोपनिषदः अविद्याजनितजन्मजरामरणादि संसारात् निवृत्तिमार्गं प्रदर्श्य अमृतत्वरूपब्रह्मप्राप्तये संदिशन्ति। यत्प्राप्त्या दुःखालयोऽयं संसारो निवर्तते। तथाचोक्तम्- ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युः।

एतद् उपनिषच्छब्दार्थैनैवाबुध्यते। तथाहि उपनिषच्छब्दोविशरणगत्यवसादनार्थत्रयबोधकाद् उपनिइत्युपसर्गद्वयपूर्वकात् षद्लृधातोः क्विप्प्रत्ययेन निष्पद्यते। सा संसारवीजस्याविद्यादेः विशरणं विनाशं करोति ब्रह्म गमयति गर्भवासा- द्युपद्रवानवसादयति च तेन उपनिषन्नाम्ना ख्यातिः। कठोपनिषदोऽप्ययमेव मुख्यतमः सन्देशः। अन्ये चानेकेऽवान्तरसंदेशाः सन्ति। ये पुंसां निश्रेयसकराः सन्ति यथादानमहिमा शास्त्रेषु प्रसिद्धएव। अस्योपदेशोऽत्र पितापुत्रयोः संवादेन प्रकटीकृतः। वाजश्रवसो विश्वजिन्नाम्नि महायज्ञे सर्वस्वं ददौ। तत्र गावोपि दत्ताः याः जरठाभग्नदन्ता दुःग्धहीना अभूवन्। तद् विलोक्य तत्पुत्रो नचिकेता नाम महद्दुःखमवाप सरोषम् उवाच पितरम्- हे पितः मां कस्मै दास्यसि। तद् अशृण्वन्तं पितरं पौनः पुन्येन तदेवोवाच तच्छ्रुत्वा कुपितो भूत्वा वाजश्रवाः प्रत्युवाच त्वांमृत्युरूपाय यमाय दास्यामि - तथा चोक्तम् तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश सोऽमन्यत्। पीतोदका जग्धतृणा दुग्धदोहाः निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान्सगच्छति ता ददत्। स होवाच पितरं तत् कस्मै मां दास्यसीति। द्वितीयं तृतीयं तं होवाच मृत्यवे त्वां ददामीति। तच्छ्रुत्वा नचिकेताः विलपन्नचिन्तयत् यमोमांगृहीत्वाकिं करिष्यति। पित्रा प्रेषितो नचिकेता यमलोकं गत्वा तत्र त्रीण्यहानि यमागमं प्रतीक्ष्य आतिथ्यं तत्कृतमंगीचकार। यमस्तस्मै त्रीन्वरान् ददौ। तत्र प्रथमो वरः पितुः क्रोधशान्तिः, द्वितीयः स्वर्गसाधनभूताऽग्निविद्या। तृतीयो वरः आत्मरहस्यज्ञानम् तथाहि-

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।<br>
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेषवरस्तृतीयः॥

यमो ब्रूते येषामविद्याग्रन्थिर्नश्लथी भवति ते संसारमागत्य जन्म

जरामरणादिदेहबन्धनान्नविमुक्ता भवन्ति दुःखपरम्परां चानुभवन्ति।

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः।
दंद्रम्यमाणा परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः॥

अतो नचिकेता अनित्यानि कर्मफलानिविचिन्त्य तानि तत्याज प्रशंसितश्च तेन। कामसमाप्तिं जगतः प्रतिष्ठां क्रतोरन्त्यमभयस्यपारम्। स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्याधीरो नचिकेतोऽत्याक्षीः। सर्वातीतं वस्तु नचिकेतसा पृष्टो यमः तमोंकारमुपदिदेश।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदंसंग्रहेण ब्रवीम्योमिति॥

ओंकार एवाक्षरं ब्रह्म सर्वोपरि विराजते। एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परं। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥ आत्मज्ञानी सर्वज्ञो भवति। तं कदाचित्शोको नाभिभवति। स शोकरहितो निर्भयश्च भूत्वा सर्वत्रात्मदर्शनं करोति। तथाहि येन रूपं रसं गन्धान् शब्दान् स्पर्शांश्चैव एतेनैव विजानाति किमत्र परिशिष्यते। स्वप्नान्तं जागरितान्तं चोभौयेनानुपश्यति। महान्तं विभुमात्मानं मत्वा धीरो न शोचति।

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत। गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत। ब्रह्मज्ञानं यावन्न जायते तावज्जीवात्मा विविधासु योनिषु भ्रमति। योनिमन्येप्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्। अयमात्मा प्राणादिषु सर्वेषु सुप्तेषु जागर्ति। तस्मिन्नेव ब्रह्मणि सर्वे लोका आश्रिताः भवन्ति। उक्तं च एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तदब्रह्म यथा अग्निः प्रतिदारुप्रतिरूपोभवति- तथात्माऽपि एकः सन् प्रतिशरीरं भिन्नो भवति। उक्तं च- अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। आत्माऽयं प्रतिरूपो भूत्वाऽपि सूर्य इव निर्लेपोऽस्ति। स बाह्यपदार्थानां गुणैर्दोषैश्च लिप्तो न भवति। सूर्यो यथासर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥

आत्मज्ञानेन अमृतत्वप्राप्तिर्भवति। एतद्विदुरमृतास्ते भवन्ति। एतस्याज्ञानेन पुनर्जन्मलब्ध्वा नानायोनिषु स्थावरजंगमादिषु जरामरणादिबहून् क्लेशाननुभवन्ति ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते। एवमात्मज्ञानी ब्रह्मवेत्ता परमंपदं प्राप्य शाश्वतं नित्यं सुखमनुभवति।

कृष्णयजुर्वेदस्य कठशाखान्तर्गता उपनिषदियं यमनचिकेतसोः संवादमुखेन ब्रह्मस्वरूपं तज्ज्ञानोपायं तज्ज्ञानेन परमपदप्राप्तिरूपं संदेशं ददाति। तस्याश्चायमपरो देशकालोचितः संदेशोऽस्ति यस्तस्या आदावेवोक्तः। साम्प्रतं विश्वस्मिन् जगति नानोपद्रवाः विविधा मनोवृत्तयः विविर्धमानाः दृश्यन्ते। येन सर्वे देशाः सर्वे मानवाः सभयाः चिन्ताकुलास्तिष्ठन्ति। तन्निवारणं सर्वे संहताभूत्वा कुर्वन्तु। निर्धनतामनुद्यममशिक्षां च समापयितुं मिलित्वा प्रयासं कुर्वन्तु। तेन भारतस्यैकता अखंडता च सुरक्षिता भवेत्। तथाहि - सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओं शान्तिः - शान्तिः - शान्तिः। इत्येष आदेशः इत्येष उपदेशः इत्येष सन्देशः।

# नैषधीयचरिते पंचनलीवर्णनम्।

नैषधीयचरितं नाम महाकाव्यं कविचक्रचूडामणेः श्रीहर्षस्य रचनाऽस्ति। एतस्मिन्महाकाव्ये द्वाविंशतिसर्गाः सन्ति। तेषु विदर्भाधिपतेः महाराजभीमस्य तनयाया दमयन्त्या नलस्य च प्रेमविवाहो वर्णितोऽस्ति। दमयन्त्याः पतिवरणाय विरचिते स्वयंवरे देशदेशान्तराद् बह्वो नृपाः देवाश्चागताः। तेषु देवेषु इन्द्रो अग्निः यमो वरुणश्चेति चत्वारो देवा नलरूपमास्थाय तत्र स्वयंवरे विराजमाना बभूवुः। तस्मिन् महाकाव्ये त्रयोदशःसर्गः पंचनलीनाम्ना प्रसिद्धः। पंचमस्य नलस्य तत्रोपस्थितत्वात्। साक्षात्सरस्वती एव दमयन्त्यै तेषां परिचयं कारयति। तत्रैकैकं पद्यं प्रत्येकं वर्णनेन प्रोच्यते। श्लिष्टैः पदैर्द्वयोर्नलस्य देवस्य च वर्णना सहृदयानां चेतांसि चमत्करोति। इन्द्रनलयोः वर्णनं प्रस्तूयते-

ब्रूमः किमस्य वरवर्णिनि! वीरसेनोद्भूतिं द्विषद्बलविजित्वरपौरुषस्य। सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्रीः॥ इन्द्रपक्षे-हेवरवर्णिनि, द्विषद्वलस्य विजित्वरं पौरुषं यस्य तस्येन्द्रस्य वीराणांसेनाया उत्कर्षं वयं किं ब्रूमः। सेनाचरी भवन्तौ सैनिकौ इभाननो गणेशो दानवारिः विष्णुश्च तयोर्वासेन यस्य रणश्रीः जनितासुरभीः जनिता कृता असुराणां भीर्भयंयया सा। अथवा असुरेभ्यो देवानां भयं तस्य ईरणं विनाशः कृतः। अस्य पौरुषं वाण्या वक्तुं न शक्यते।

नलपक्षे- शत्रुवलविजेतृपौरुषस्य अस्य नलस्य वीरसेननाम्नो नृपाद् उद्भूतिमुत्पत्तिं किं व्रूमः। यस्य रणश्रीः सेनाचरीभवतां इभानां गजानां सेनायामचली भवतां पर्वतायमानां गजानां वा आननदानवारिणः मुखमदजलस्य वासेन सुरभिर्जनिता। अग्निनलयोः वर्णनम्-नैवाल्पमेधसि पटो रुचिमत्वमस्यमध्येसमि-न्निवसतो रिपवस्तृणानि। उत्थानवानिह पराभवितुं तरस्वी शक्यः पुनर्भवति केन विरोधिनायम्।

अग्निपक्षे - एधसि काष्ठे पटोः दहनसमर्थस्य अस्य अग्नेः रुचिमत्वं दीप्तिः अल्पं नैव। मध्येसमित समिधांमध्येनिवसतोऽस्य तृणानि शत्रवः सन्ति। अयमुत्थानवान्

ऊर्ध्वज्वाल: तरस्वी वेगवांश्च अयं केन रिपुणा जेतुं शक्यः न केनापीतिभावः। वस्तुतः केन जलेन पराभवितुं शक्यः। वह्निरद्भिः प्रशाम्यति।

नलपक्षे-पटोः ग्रहणधारणसमर्थस्य अस्य नलस्य अल्पमेधसि मन्दप्रज्ञे जने रुचिमत्त्वं नैव। मध्येसमित् संग्रामे निवसतोऽस्य रिपवः तृणानि भवन्ति। तृणतुल्याः शत्रवो वेगेन विनाश्यन्ते। इहास्मिन्लोके उत्थानवान् उम्युदयवान् बलवान् च। कोऽपिशत्रुस्तं न जेतुं शक्नोति संप्रति यमनलयोः साम्यं श्रुणुत-

मित्रप्रियोपजननं प्रति हेतुरस्य संज्ञा श्रुताऽसुहृदयं न जनस्य कस्य। छायेदृगस्य न कुत्रचिदध्यगायि तप्तं यमेन नियमेन तपोऽमुनैव॥ यमपक्षे अस्य यमस्य उपजननमुत्पत्तिं प्रति मित्रस्य सूर्यस्य प्रिया पत्नी संज्ञा नाम। हेतुः संज्ञानाम्नी सूर्यपत्नी एतस्य जननी। छायानाम्नीतु कुत्रचित्पुराणादौ नाध्यगायि। छाया तु शनैश्चरस्यैव माता। अयम् यमः कस्य असुहृद् प्राणहर्ता न, अपि सर्वस्यापि प्राणहारकः। अमुना यमेन नियमेन नक्तव्रतोपवासेन तपस्तप्तम्। अयं सूर्यपुत्रोधर्मराजश्च। नलपक्षे-अस्य नलस्य संज्ञा अर्थात् नाम मित्रप्रियस्य मित्राणामिष्ठस्य उपजननं प्रत्युत्पादनं प्रति हेतुः। अयं कस्य सुहृत् न, किन्तु सर्वस्येत्यर्थः। अस्य ईदृक् छायाशरीरकान्तिः कुत्रचिन्न दृष्टा। अतिसुन्दरोऽयमित्यर्थः। अमुना नलेन त्वत्प्राप्तये यमेन ब्रह्मचर्यादिना नियमेन नक्तव्रतादिना च तपः तप्तम्। अयं मित्रोपकर्ता पुण्यश्लोकश्चातोवरणीयः। वरुण-नलयोः वर्णनम्-सस्यन्दनैः प्रवहणैः प्रतिकूलपातं का वाहिनी न तनुते पुनरस्य नाम। तस्या विलासवति कर्कशताश्रिताया ब्रूमः कथं बहुतयासिकतावयंताः॥ वरुणपक्षे- हे विलासवति भैमि अस्य वरुणस्य का नाम वाहिनी नदीसस्यन्दनै प्रवहणैः वेगयुक्तैः प्रवाहैः प्रतिकूलं प्रतितटं प्रति पातं गमनं न कुरुते। अपि सर्वा एव तनुते।

वयं तस्यास्ताः सिकता बालुकाः बहुतया कथं ब्रूमः। याः सिकताः बालुकाः कर्कशतां काठिन्यंश्रिताः प्राप्ताः। काकीणां जलजन्तुविशेषाणां शतैः आश्रिताःजलेऽसंख्याःकर्कट नामानो जन्तवो वर्तन्ते।

नलपक्षे- अस्य नलस्य वाहिनी सेना सस्यंदनैः रथयुक्तैः प्रवहणैः प्रकृष्टैर्वाहनैः

अश्वादिभिः प्रतिकूलान्नं शत्रूणां पातं विनाशं करोति। काकीणांश्वेताश्वानां शतैः आश्रिता:यासिकता बहुतयाप्रसिद्धा बालुकाः वयं क्रिं ब्रूमः। बालुकाः कथंचित्संख्यातुं शक्यन्ते नतु तस्य सेना। अतिमहती शत्रुहन्त्रीचास्य सेनास्ति भावः। इतोऽप्यधिकतरचमत्कारकारि पद्यं श्रूयतामत्रैकस्मिन्पद्ये इन्द्राग्नियमवरुणानां नलेन सह वर्णनं विहितम्। 'देवः पतिर्विदुषि! नैषधराजगत्या निर्णीयते न किमु न व्रियते भवत्या। नायं नलः खलु तवातिमहानलाभो यद्येनमुज्झसि वरः कतरः परस्ते।' इन्द्रो वर्ण्यते- हे विदुषि दमयन्ति एष देवाधिराजगत्याः भूलोकस्य पतिर्न किन्तु स्वर्लोकस्यपतिः इन्द्रस्त्वया किमु न निर्णीयते कुतो वा न व्रियते। स त्वया वरणीय इत्यर्थः धराणां प्रवर्तानां आजेक्षेपणे उपाय भूतेन वज्रेण अयं ना पुरुषः वज्रायुधो देवस्त्वया न निश्चितः। अन्यथा त्वया व्रतः स्यात्। अयं नलो न किन्तु नलाभः नलसदृशः अतिमहातेजस्वी अस्ति यद्येनमूज्झसि चेत्तवकतरोऽभीष्टो वरः स्यात् किन्तु परः शत्रुरेव। त्यागेन कतरोऽग्निः केन जलेन तरसिशाम्यतीति कतरोऽग्निः वरः स्यात्।

अग्निपक्षे- धरायां अजेनमेषेणगत्या उपलक्षितः देवः कान्तिमान्। दिवधातोः क्रीडार्थत्वात्। अमरश्चेति। अयं नलो न किन्तु ततोऽतितेजस्वी आग्नेय्या दिशः पतिः अग्निरेव। यदि एनंत्यजसि तर्हि परोऽन्यः कस्ते पतिः भवेत्।

यमपक्षे-धराजगत्या धरान् पर्वतान् अजीत शृंगाभ्यांखुरै वा क्षिपति इति धराजोमहिषस्तस्यखेगत्या उपलक्षितः यमो महिषवाहनः। पतिः पालयिता देवः क्रीडापरः अमरश्च त्वया निश्चेतव्यो वरणीयश्च। एतस्मादन्यस्तव श्रेष्ठः कतरो वरः यदि एनमुज्झसि चेत्तव लाभो न किन्तु हानिरेव। अयं नलो न किन्तु नलाभः नलसदृशः। वरुणपक्षे- एष धराजगत्या भूलोकस्य पतिर्न किन्तु पाताललोकस्यपतिः देवः सुन्दरो वरुणः किं न निश्चीयते व्रियते च। अयम् अतिमहा अतितेजस्वी नलाभः नलरूपधारणात् नलसदृशः। अथवा अग्नेः अभाः कान्त्यभावो यस्मात् सः जलरूपत्वादग्निविरोधीत्यर्थः। यद्येनं त्यजसि चेत्कतरस्ते वरःस्यात्। नलपक्षे- नैषधराजगत्या निषधदेशोद्भवानां जनानां राजा इति गत्या ज्ञानेन देवः राजा ना मनुष्यो नलः किं न निश्चीयते किं वा न क्रियते। यस्मात्तव महान् नस्य विष्णोः

लाभः। ना विष्णुः पृथिवीपतिः इति कोशाद्नलोविष्णुरूपएव। अतो निषधाधिपो मनुष्य एवायं पंचमो नलः इति निश्चेतव्यो वरणीयश्च। अतिमानां अतिक्रान्तलक्ष्मीकाणां हाने त्यागे लाभः निकटस्थानामेषां कृत्रिमं सौन्दर्यं नलाकारधारणात्। नलस्य तु सहजं सौन्दर्यम् इति नलं निश्चित्य वृणु। एतेभ्योऽन्येऽप्यर्थाः श्लेषमहिम्नबोद्धव्याः । लोके संस्कृतभाषयैव इद गौरवं प्राप्तम् यदेकस्मिन्पद्ये पंचविभिन्नाः अर्थाः स्फुटीभवन्ति।

# वीराः सम्भावितात्मानो न दैवं पर्युपासते

सूक्तिरियं महाकविवाल्मीकेः आदिकाव्यात् रामायणादुद्धृतास्ति। वीराग्रणी रामानुजस्य लक्ष्मणस्य मुखाद् विनिःसृताऽस्ति। आत्मसंभाविता वीरपुरुषाः कदापि दैवं भाग्यम् अवलम्ब्य तदधीनाभूत्वा न तिष्ठन्ति। तात्पर्यमिदं यदस्मिन्नतिविचित्रपरम्परावाहिनि संसारे नानाविधविचारशालिनो मानवाः वर्तन्ते। केचन भाग्यवादिनो जनाः दैवाधीनमेव सर्वं विधेर्विधानं चक्रवत्स्वयमेव परिवर्तते। कस्यापि स्वार्थस्य सिद्धयेकस्यचिदुद्यमस्य कापि आवश्यकता नास्ति। नच कस्यापि साहाय्यस्यापेक्षाभवतीति निश्चयपरा यद्भावि तत्स्वयमेव भविष्यति इति विश्वस्य कर्मपरित्यजन्ति। ते चरैवेति चरैवेति इति श्रुतेर्घोषं न शृण्वन्ति। दैवाधीनमेव सकलं सिद्धिजातं तदर्थं नास्ति कर्मणः उद्योगस्य वा आवश्यकतेति भाग्यवादिनां कापुरुषाणां मतं वीरासंभावितात्मानो न मन्यन्ते। यतो हि तत्रानेके दोषाः समुद्भवन्ति। देववादिनो जनाः कर्मत्यागेन अलसाः कर्मभीरवो अकर्मण्याश्च जायन्ते। ते कर्माचिरणाद्विभ्यति। केवलं परावलम्बिनो भूत्वा जीवनं यापयितुं वाञ्छन्ति। स्वावलम्बनमात्मनिर्भरतादयाःसप्तगुणास्तेभ्यो दूरंगता भवन्ति। यतो हि आलस्यं तेषां कलेवरे गृहं कृत्वा तिष्ठति। तदेव तेषां प्रगतिपथे सदा बाधकं च भवति। तेषां भाग्यवादिनां भविष्यं बालुकाभित्तिरिव भवति यत्स्वल्पेनैवाघातेन धराशायि सम्पद्यते। अलसा जनाः स्वकार्यस्य असफलतायां जातायां देवे ईश्वरे भाग्ये वा दोषमारोपयन्ति। उक्तं च- आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः। नास्त्युद्यमसमो वन्धुर्यं कृत्वा नावसीदति॥

ये अपरे पौरुषवादिनो जनास्ते कर्मवीरा अनलसाश्च भवन्ति। ते संसारे धर्मार्थ-काममोक्षरूपस्य पुरुषार्थचतुष्टयस्य प्राप्तये संघर्षंकृत्वा स्वाभीष्टप्राप्तिं कुर्वते। तेषामयमुद्घोषः - 'हतो वा प्राप्स्यासि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।' अथवा 'युद्धस्व विगतज्वरः।' ते जीवने एनमेव सिद्धान्तं स्वीकुर्वते। यदा भगवान् रामचन्द्रः रावणेन सह योत्स्यमानो बभूव। तदा तस्य मार्गे समुद्रो बाधकोऽभवत्। मार्गप्रदानाय बहुशः प्रार्थितोऽपि जलनिधिस्तस्मै पारंगन्तुं मार्गं न ददौ। तदालक्ष्मणः क्रुद्धः सन्नुवाच - दैवमालव्य न स्थातव्यम्। शक्ति प्रयोगे विधीयताम्। संभावितात्मानो

दैष्टिकतां नाद्रियन्ते।

ये मानवाः पौरुषे उद्यमे कर्मणि च विश्वसन्ति तान् सर्वसम्पदः स्वयमेव वृणते। संसारेऽनेके महामानवा अभूवन् ये दैवं निहत्य पौरुषोपासका भूत्वा स्वहस्तेन सफलतामन्दिरं निर्मितवन्तः। तेषु ईश्वरचन्द्रविद्यासागरः विश्ववन्द्यो महात्मागान्धीःमदनमोहनमालवीयः महापुरुषा अभवन्। एतान् को न जानाति। निर्धनतायामेव एतेषां पालनं पोषणं जातम्। स्वपुरुषार्थबलेनैव स्वजीवनमुन्नतिशिखरं नीतवन्तः। पुरुषार्थपीयूषपानेन ते अमरतां गताः। नास्ति तेषां यशः काये जरामरणजं भयम्। इत्थं पौरुषे बद्धादराः सुनिश्चितं स्वलक्ष्यसिद्धिं लभन्ते। विषमात् विषमतरा अपि परिस्थितयो न तान् विचालयितुं प्रभवन्ति। पौरुषबलेन ताजमहलनाम्ना ख्यातं विश्वविख्यातं सुन्दरं समाधिभवनं जनैर्निर्मितम्। महाराजो भगीरथः कठिनपरिश्रमेण उद्यमेन तपसा च भगवतीं भागीरथीं भूतलमानिनाय। कर्मसु कृतादरा जनाः स्वावलम्बिनो भवन्ति। स्वावलम्ब एको महान् गुणः। महारत्नं चास्ति। स्वावलम्बिजनेषुआत्मोत्साहः प्रादुर्भवति। तेन ते सकला बाधा पादेनाक्रामन्ति। समुन्नतिलक्ष्यं च प्राप्नुवन्ति। 'न लम्बते दैष्टिकतां न निषीदति पौरुषे। शब्दार्थौ सत्कविरिव द्वयं विद्वानपक्षते॥' वस्तुतस्तु पौरुषं दैवं चोभयं समुक्षिदितं कार्यं साधयति। न केवलं दैवं न च पुरुषकारः। यथाहि एकेन चक्रेण रथो न गन्तुं शक्नोति तथैव केवलेन दैवेन पुरुषार्थेन वा सिद्धिर्न संपद्यते। उक्तं च- यथा ह्येकेन चक्रेण न रथस्यगतिर्भवेत्। एवं पुरुषकारेण विना दैवं न सिद्ध्यति॥ एवमुद्यममहिमाभृशं गीतो बुधैः-

'उद्यमी लभते सिद्धिमयोग्योऽपि सुनिश्चितम्। अनूरुर्गगनस्यान्तं प्रयात्येव दिने दिने।' उद्यमबलेनैव भारतीया जनाः स्वदेशं परतंत्रतापाशान्मोचयित्वा स्वतंत्रमकार्षुः। उद्यमेनैव मानवाः चन्द्रलोकमप्याक्रान्तवन्तः। उद्यमेनैव पूर्वं जडमतिः पाणिनिः व्याकरणग्रन्थमपूर्वं निर्ममौ। उद्यमं विना वने मृगेन्द्रोऽपि स्वोदरपूरणे समर्थो न भवति। उक्तं च 'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः। न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।' श्रीमद्भगवद्गीतापि मामेहाभिभूतस्यार्जुनस्य मोहजालंछित्वा कर्मकर्तुं प्रेरयति स्म। इत्थं कर्मैव सिद्धि-

प्रदायकं सततं कर्म कर्तव्यम् इति समुपदिशन्ती पौरुषस्य प्राधान्यं प्रकटयति।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्॥ संस्कृत साहित्ये प्रसिद्धा सूक्तिरियं उद्योगस्य प्रशंसां विदधाति 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेनदेयमिति का पुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः।' किं बहुना दैवोपासकेषु अनेके दोषाः पदं कुर्वन्ति। पौरुषे चानेके गुणाः। अतः सुष्ठूच्यते- 'वीरासंभावितात्मानो न दैवं पर्युपासते' इति।

# नास्ति चात्मसमं बलम्

सुख-दुःख विमिश्रिते अस्मिन् जगति नैतादृशः कोऽपि आयाति दृष्टिगोचरतां यो नेच्छेत् चिरं सुखं विपुलां कीर्तिं सुदुर्लभं पदम् अलौकिकां शक्तिं सकलाञ्च विद्याम्, इच्छेच्च दुःखं दैन्यं मौर्ख्यम् अपयशो वा कदाचित्। तथापि सुखशक्तिविद्यादीन् समीहमानाः दुःखदैन्यादीन् परिजिहीर्षवो विरलाः एव जनाः ये स्वेच्छितान् पदार्थान् प्राप्नुवन्ति परित्यजन्ति च अनीप्सितान्। तत्र साफल्यस्य किं कारणम् ? आत्मबलमेव कारणम्।

यद्यपि जनबलं धनबलं नीतिबलं विद्याबलञ्च इत्येतानि सन्ति बहूनि बलानि मानवजीवनोपयोगीनि तथापि नास्ति अन्यत् आत्मसमं बलम्। बलवत्येव आत्मनि सर्वाणि बलानि इष्टफलदायीनि भवन्ति, नान्यथा। यतो हि आत्मनैव सर्वं सम्पाद्यते क्रियाजातं न तु जडभूतेन केनचित् पदार्थेन, अतः यदि बलवान् आत्मा तर्हि सुकराणि भवन्ति कर्माणि क्रियमाणानि। बलहीनेन चात्मना सामान्यतः सुकराणि अपि कर्माणि दुष्कराणि जायन्ते।

कस्मिन्नपि देशे कस्मिन्नपि काले कस्मिन्नपि कुले अवतरितानां पूतचरितानां ऐहिकामुष्मिकयशः प्राप्तानां महापुरुषाणां माहात्म्यस्य निदानं खलु आत्मनो बलमेव। भगवदवतारत्वेन विश्वस्य उत्पत्ति-पालन- संहारकारकत्वेन प्रसिद्धोऽपि रामो नान्यसाधनमाश्रित्य बहूनि आश्चर्यकराणि कर्माणि सम्पादितवान् प्रत्युत सामान्यजन - चिन्ताकर्षम् असामान्य-सुख-जातं पृष्ठतः कृत्वा अग्रे च कृत्वा घोराणि हृदयविदारीणि दुःखानि वनवासावधि- घटमानानि जानकी- हरणादीनि स प्राधान्येन आत्मबलं समाश्रित्य मानवेतरान् वन्यान् वानरादीन् जीवान् नियोज्य सीताहरण- समुद्भूतम् ऋणां विशोधयितुम् असंख्य - राक्षस- घटितसैन्यं महाप्रभावम् अतिबलवन्तं लङ्कापतिं राक्षसराजं रावणं जघान। अयमस्ति आत्मबलस्यैव प्राधान्यं यत्प्रभावात् मानवो विषम-गिरि-कन्दरासु बव्राज महारण्येषु चचार, महोदधीन् ततार।

आत्मबलसम्पन्नाः एव हि जनाः महापुरुषाः भवन्ति, न तु भीरवः। ते महापुरुषाः

आत्मबलेनैव महत्कर्माणि सम्पादयन्ति। ये केचन मन्यन्ते महत्कर्मसम्पादने महत्साधनानाम् अपेक्षा वर्तते, ते खलु न यथार्थदृष्टय:। महापुरुषगतेन आत्मबलेन सर्वाणि साधनानि स्वयमेव तस्य समीपम् उपसर्पन्ति। तस्य दर्शनादेव तद्वशीभूता: जना: स्वीयान् स्वीयान् प्राणान् अपि त्यक्तुम् उद्यता: भवन्ति। अस्माकं नेतु: सुभाषचन्द्रबोसस्य दर्शनात् भाषणश्रवणाच्च प्रभाविता: श्रोतार: तत्क्षणमेव तस्मै सर्वस्वं दातुं समुद्यता: भवन्ति स्म। भीता: गौराङ्गा: यन् महच्चिन्ता-कवलिता: अभूवन् तत् महापुरुषस्य आत्मबलसम्पन्नस्य सुभाषस्य प्रभावादेव। विदेशेष्वपि तस्य प्रभाव: प्रससार। तत्र गत्वा स वैदेशिकान् अपि नेतृन् स्वानुगान् अकरोत्। केवलम् आत्मबलम् आश्रित्य एव साधनविहीनेन तेन एतत्सर्वं कृतम्। एतादृशमेव आत्मबलसम्पन्नं वीरम् उद्दिश्य कथितम्।-

अङ्गणवेदी वसुधा, कुल्या जलधि: स्थली च पातालम्।
वल्मीकश्च सुमेरु: कृतप्रतिज्ञस्य वीरस्य।। 'इति।

सर्वेषां मानवानां जीवने समायान्ति एतादृशा: आर्तिक्षणा:, यत्र न भवति कश्चित् प्रियतमोऽपि सहाय:। तदवसरेषु मित्राण्यपि विमुखीभवन्ति, बान्धवोऽपि परित्यजन्ति, प्रभवोऽवि न रक्षन्ति, पुत्रा अपि न सेवन्ते, कलत्रमपि न स्निह्यति, पितापि न पालयति, मातापि न लालयति, सर्वेऽपि विपरीता: एव सञ्जायन्ते, यथोक्तम्-

'आपदामापतन्तीनां हितोऽप्यायाति हेतुताम्।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने।' इति

सर्वेऽपि नेतार: महापुरुषाश्च आत्मबलेनैव महत्पदं प्राप्तवन्त:। स्वामिन: विवेकानन्दस्य सहाय: नासीत् कोऽपि विदेशेषु यत्र गत्वा स वैदेशिकान् जनान् आत्मशिष्यान् अकरोत्। तत्रासीत् आत्मबलमेव कारणाम्। सर्वसाधनसम्पन्ना: अपि आत्मबलहीना: जना: पदे पदे भीतिं विशङ्कमाना: हतोत्साहा: जायन्ते। सन्ति संख्यातिगा: जना: धनवन्त: विद्यावन्त: प्रभाववन्त: विविध-शक्ति-समन्विता: किन्तु सर्वेऽपि ते न महत्कर्माणि कर्तुं समर्था:। लोकोपकारीणि महत्कर्माणि सम्पाद्यन्ते त्यागेन तपसा सत्येन धैर्येण एते त्यागादयो गुणा

आत्मबलमेव अनुसरन्ति। आत्मबलविहीनाः एव जनाः परैः तिरस्कृताः भवन्ति, विविधान् अन्यायान् सहन्ते। किन्तु यस्य आत्मा बलवान् स एकाकी अपि दुःखानि निराकरोति। अफ्रीकादेशगतः महात्मागान्धी यदा तत्रत्यैः विरोधिजनैः तिस्कृतः तदा स सत्यम् अहिंसाञ्च स्वीकृत्य स्वातंत्र्यस्य आन्दोलनं प्रारभत्। तस्य आत्मबलप्रभावादेव असंख्यकाः जनाः स्वतंत्रता संग्रामस्य सैनिकाः जाताः। नैतावत् सर्वेऽपि जनाः धर्मभेदं जातिभेदं विहाय एकतासूत्रे निबद्धाः। एतत्सर्वं तस्य आत्मबलस्यैव फलम्।

एतादृशस्य महात्मनः प्रभावात् अन्येऽपि महापुरुषाः प्रभावात् अन्येऽपि महापुरुषाः सञ्जायन्ते। महात्मनो गान्धिनः प्रभावादपि बहवो महापुरुषाः अभवन्, तेषु अन्यतमः पण्डितः जवाहरलालनेहरुः यः विश्वविश्रुतं नेतृत्वकीर्तिम् अलभत्। आत्मबलसम्पन्नस्य एतादृशस्य जनस्य कीर्तिः कल्पान्तेऽपि न नश्यति। इतिहासग्रन्थानां पृष्ठेषु आत्मबलसम्पन्नानां महापुरुषाणां यशोऽद्यापि सुरक्षितं वर्तते, प्रेरयति च पाठकान् शुभानि कर्माणि कर्तुं शुभगतिं च प्राप्तुम्।

आत्मबलरहितो भीरुः पुनः स्वजीवनकालेऽपि मृत इव अकिञ्चित्करो भवति, मृतं च तं न कोऽपि स्मरति। आर्यजीवने भगवतो रामस्य महिमा न केवलं धार्मिकभावनया एव वर्तते, अपितु रामस्य प्रभूतेन आत्मबलेनैव। रामस्तानि तानि कष्टानि वनवासकालसमुद्भूतानि प्राप्तवान् किन्तु धैर्यं न त्यक्तवान्, रावणं हतवान्, साफल्यञ्च प्राप्तवान्, तत्तु सर्वम् आत्मनः परिपुष्ट-बलेनैव। अतः साधनाभावे अल्पसाधनत्वे वा आत्मबलमेव विजयस्य कारणम्, उक्तमपि-

विजेतव्या लङ्का चरणतरणीयो जलनिधिः।
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
पदातिर्मर्त्योऽसौ सकलमबधीद्राक्षसकुलम्,
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।''

अरण्ये बहवः पशवः निवसन्ति, इतस्ततः विचरन्ति। भूधराकाराः गजा अपि यूथैः सहिताः परिभ्रमन्ति किन्तु वन्यजीवेषु अग्रगण्यः सिंहः एव। सिंहो लघुकायोऽपि सन् आत्मबलादेव वनाधिपतिर्जातः। अन्ये जीवाः न तथा

आत्मबलसम्पन्नाः, यथा सिंहः उक्तमपि-

"नाभिषेको न संस्कारः सिंहस्य क्रियते वने।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता" इति॥

स्वराज्योऽस्माकं जन्मसिद्धोऽधिकारः इति महामन्त्रस्य प्रचारकः बालगङ्गाधरतिलकः आत्मबलादेव लोकमान्यो बभूव। कुपितैः आङ्ग्लाधिकारिभिः कारागारे निःक्षिप्तोऽपि सः स्वाधिकारघोषणां न तत्याज्य अनेनैव आत्मबलसम्पन्नेन महात्मना 'केसरी' 'मराठा' चेति समाचारपत्रद्वयं प्रकाशितम्, राष्ट्रभावना च प्रचारिता भारतीयेषु। एवमेव आत्मबलयुक्तस्य पं० मदनमोहनमालवीय विषयेऽपि वक्तुं शक्यते। महत्कर्म आसीत् काशीहिन्दूविश्वविद्यालयसंस्थापनम्, अकिञ्चनश्च आसीत् मदनमोहनमालवीयः। किन्तु आत्मबलप्रभावात् तेन महात्मना स्वसङ्कल्पितं प्रत्यक्षीकृतम्। अतः कथनमेतत् सर्वथा सत्यम्, यत-

'नास्ति चात्मसमं बलम्' इति।



# डॉ. आशाराम त्रिपाठी

**जन्मः** 10 दिसम्बर 1941, ग्राम- शिववंशी का पुर, जनपद- इलाहाबाद (उ०प्र०)
सम्प्रति- प्रोड्यूसर, आकाशवाणी, लखनऊ

**शिक्षाः** एम०ए० (संस्कृत), एम०ए० (हिन्दी), डी०फिल्०, प्रोफिसिएन्सी इन जर्मन

**प्रकाशित कृतियाँः** (1) 'चित्रकूट शतक' (खण्ड काव्य), 1971-72, (2) 'चतुर्दशी' (राष्ट्रगीत) 1973, (3) 'यज्ञ और याज्ञवल्क्य' 1983, (4) 'अग्निगर्भा' 1987, (5) 'याज्ञवल्क्य और वैदिक यज्ञ परम्परा' 1988, (6) 'ज़रा सी धूप' (कविता संग्रह) 1988, (7) 'विचार गंगा' 1991, (8) 'दर्द अपना अपना' (कविता संग्रह) 1991, (9) 'तपस्विनी उर्मिला' (खण्ड काव्य) 1992, (10) 'गीतायनम्' (संस्कृतगीत) (11) हिरण्मयेन पात्रेण (संस्कृत निबन्ध), 1994